## [ अथ पिण्डीक्रमोक्ताक्षोभ्यमण्डलम् । ]

पिण्डीक्रमोक्तमण्डले तु कूटागारपर्यन्तं[1] पूर्ववत् । क्रोधानां तु विशेषो वक्ष्यते । कूटागारस्य मध्येऽक्षोभ्यः कृष्णो रौद्रः सितरक्तसव्येतरमुखः सव्यकरैः[2] कुलचक्रपद्मानि वामैर्घण्टाचिन्तामणिखड्गान् बिभ्राणः स्वाभस्पर्शवज्रालिङ्गितः ।

तस्य पूर्वा[10a]दिदिक्षु वैरोचनादयः, आग्नेयादिविदिक्षु लोचनादयः ।

तत्र वैरोचनः शुभ्रः शान्तः शुक्लकृष्णरक्तमुखः चक्रवज्रपुण्डरीकघण्टामणिखड्गधरः ।

उक्तेषु वक्ष्यमाणेषु च चतुर्भुजेषु प्रथमं सव्येषूर्ध्वतोऽधो[3]यावद्वामेष्वधस्तादूर्ध्वचिह्न-प्रतिपादनक्रमः । मूलसव्यवाम[4]क्रमेण मुखत्रयवर्णप्रतिपादनम् ।

रत्नसम्भवः पीतः पीतकृष्णसितास्यो मणिवज्रचक्रघण्टापीतपद्मखड्गधरः ।

अमिताभो रक्तो रक्तकृष्णसिता[10b]स्यो वामकरेण घण्टापाशौ स[5]नालं गृहीत्वा हृद्देशे रक्तपद्मं दक्षिणकरेण विकाशयन्नपरैर्वज्रचक्ररत्नखड्गभृत् ।

अमोघसिद्धिर्हरितो हरितकृष्णसितास्यः, खड्गविश्ववज्रचक्रघण्टाहरितपद्ममणिभृत् ।

एते पञ्च तथागता वक्ष्यमाणा विष्कम्भिपर्यन्ता जटाजूटरत्नमुकुटविचित्ररत्नाद्याभरण-माण्डिताः ।

लोचना वैरोचनसमा । किन्तु पुण्डरीकस्थाने सितोत्पलम् ।

मामकी अक्षोभ्यसदृशी । किन्तु पद्मस्थाने[6] नी[11a]लरक्तोत्पलम् ।

पाण्डरा[7]ऽमिताभसमा ।

ताराऽमोघसिद्धिसमा विश्ववज्रचक्रपीत[8]नीलाभोत्पलघण्टारत्नखड्गान् बिभ्रती ।

द्वितीयपुटे आग्नेय[9]कोणे रूपवज्रा लोचनेव । किन्तु प्रधानभुजाभ्यां रक्तदर्पणं बिभ्राणा ।

नैर्ऋत्ये शब्दवज्रा पीता पीतकृष्णसितमुखी नीलवीणावाद[10]नपरप्रधानकरद्वया शेष-करैर्वज्रनीलोत्पलरत्नखड्गान् बिभ्रती ।

वायव्ये[11] गन्धवज्रा पाण्डरे[12]व । प्रधानभुजाभ्यां तु पीतगन्धशङ्खधरा ।

---

1 B °ङ्कं 2 C रक्त° Kula here is the Kula symbol "Vajra". 3 C °ध्येया 4 B °मे 5 B फ° 6 B °न° 7 B °ण्डुला 8 C °ता 9 C °ये 10 C °वद° B °दव° 11 B °व्यां 12 B °ण्डुले°

ई[ 11b ]शाने[1] रसवज्रा श्यामा श्यामकृष्णसितास्या हस्ताभ्यां रक्तरसभाण्डं शेषै[2]र्वज्र-चक्ररत्नखड्गान् बिभ्रती ।

तृतीयपुटे पूर्वस्यां पङ्क्तिकायां मैत्रेयक्षितिगर्भौ, दक्षिणस्यां वज्रपाणिखगर्भौ, पश्चिमायां लोकेश्वरमञ्जुघोषौ, उत्तरस्यां सर्वनिवरणविष्कम्भिसमन्तभद्रौ ।

एतेऽष्टौ स्वकुलेशसमाः। किन्तु मैत्रेयस्य प्रधानकरेण सपल्लवनागकेशरकुसुमं चक्राङ्कितमाम्नायात् ।

पूर्वादिद्वारेष्वाग्नेयादिकोणेषूर्ध्वमधश्च[3] यथाक्र[ 12a ]मं दश क्रोधाः ।

तत्र यमान्तकः कृष्णः कृष्णसितरक्तवक्त्रो वज्रमुद्गरचक्रवज्राणि हृदि सपाशतर्जनी-घण्टापरशून् बिभ्राणः । १ ।

प्रज्ञा[4]न्तकः श्वेतः सितकृष्णरक्तवदनो वज्रवज्राङ्कितसितदण्डखड्गहस्तसपाशतर्जनीघण्टा-परशुभृत् । २ ।

पद्मान्तको रक्तो[5] रक्तकृष्णसितास्यो रक्तपद्मखड्गमुशल[6]घण्टापरशुपाशधरः । ३ ॥

विघ्नान्तको नीलो नीलसितरक्तास्यो विश्ववज्रचक्रमुशल[7]सपाशतर्जनीघण्टापरशुधरः । ४ ।

अ[ 12b ]चलो नीलो नीलसितरक्तमुखः खड्गवज्रचक्रतर्जनीपरशुपाशधारी[8] । ५ ।

टक्किराजो नीलो नीलसितरक्तमुखः पाणिभ्यां वज्रहु[9]ङ्कारमुद्रामपरैर्वज्रखड्गपाशाङ्कुशान् बिभ्राणः । ६ ।

नीलदण्डः कृष्णः कृष्णसितरक्तवक्त्रो वज्राङ्कनीलदण्डखड्गचक्रहस्तसपाशतर्जनीपद्म-परशुधरः । ७ ।

महाबलः कृष्णः कृष्ण[ 13a ]शुक्लरक्तवदनो वज्राङ्कदण्डखड्गचक्रहस्तसपाशतर्जनीपद्म-परशुधरः । ८ ।

उष्णीषचक्रवर्ती कृष्णः कृष्णसितरक्तास्यः प्रधानभुजाभ्यामुष्णीषं मूर्ध्नि धारयेत् शेषैर्वज्रपद्मतर्जनीखड्गान् । प्रसृतसमोत्तान[10]पाणिरनामिकानखयोरुपर्य[11]ङ्गुष्ठनखौ धारयेत् कनि-ष्ठसू[12]चिः । तथैव मध्यमे समनखशिखे संसक्त[13]प्रदेशिन्यौ[14] मध्ये सूच्याकारेणेति समन्तावभासा[15] नामोष्णीषमुद्रा क्वचित् । क्वचित्तु अन्यथा । ९ ।

सुम्भराजः कृष्णः कृष्णसितरक्ताननो वज्रचक्ररत्नहस्तसपाशतर्जनीपद्मखड्गधरः । १० ।

---

1 C ऐशान्ये 2 B शङ्खै° 3 B °र्म° 4 B पद्मा° 5 B omits 6 B °मुद्गर° 7 B °खल° 8 BC °धारिणः 9 B °भ्रू° 10 B °तान् 11 BC °य° 12 B °शु° 13 B °क्ते 14 B °न्यो 15 B °सो

एतेऽक्षोभ्यादयो देवा विश्वपद्मोपरि [13b] यथाक्रमं पंचसूचिक[1]वज्रचक्रे नवांशमरकतरक्त[2]पद्मविश्ववज्रचक्रवज्रपद्मविश्ववज्रनागकेशरपुष्पचक्रवज्ररत्नपद्मवज्राविश्ववज्रमुद्गरवज्ररक्ताब्जविश्ववज्रखड्गमुष्टिवज्रनीलदण्डकृष्णदण्डवज्र[धराः] वज्रस्थसूर्ये चन्द्रस्थितास्त्रिमुखाः षड्भुजाः खड्गमुष्टिनः ।

पुनरन्यत्रापि स्वदेवता वर्णरत्नघटिताः । तत्र वैरोचन[3]देव्यो बोधिसत्त्वाश्चन्द्रस्थाः, अन्ये सूर्यस्थाः, अक्षोभ्यादयो वज्रपर्यङ्किणः ।

क्रोधास्तु प्र[14a]त्यालीढचरणाः प्रतिवक्त्रं रक्त[4]वर्त्तुलत्रिनेत्रा ज्वलन्तो नद[5]न्तोऽतिभीमा रक्षाचक्रोक्त[6]विकृतरूपादिविशेषणशालिनः ।

अत्र चक्रेश एव[7] सप्रज्ञः, अ[8]परदेवताः सुम्भपर्यन्ता निष्प्रज्ञाः । रक्षाचक्रस्थास्तु यमान्तकादयः सस्वाभप्रज्ञाः । ताश्च यथाक्रमं वज्रवेताल्यपराजिताभृकुट्येकजटाविश्ववज्रीविश्वरत्नीविश्वपद्माविश्वकर्म्मागगनवज्रिणीधरणीधराः ।

अक्षोभ्यस्य हृदि ज्ञानसत्त्वो[9] द्विभुजः सप्रज्ञो रक्तः । स्वहृदि कृष्णहूँ[10] । वैरोचनस्य [14b] हृदि ॐ । रत्नेशस्य हृदि स्वा[11] । अमिताभस्य आ । अमोघस्य हा । लोचनादिदेवीनां लोँ माँ पाँ ताँ जः[12] हूँ[13] वँ होः[14] । स्पर्शवज्रायाः स्पँ[15] । मैत्रेयाद्यष्टानान्तु मैँ क्षिँ[16] ओँ ओँ ओँ हूँ ओँ सँ । दशक्रोधानां हूँ[17] । हृदयमन्त्रास्तु देवतानां वज्रावल्यामुक्ताः ।

कुलेशस्तु अक्षोभ्यसमन्तभद्रयोर्वज्रसत्त्वः पूर्वोक्तः । किन्तु वज्रचक्रपद्मघण्टामणिखड्गधरः स्वाभवज्रधात्वीश्वरी[18]समालिङ्गितः । १ ।

तथागतानां मामकीवज्रपाणिमञ्जुघोषोष्णीषसुम्भराजानामक्षोभ्यः । २ ।

लोचनारूपवज्रामैत्रेयक्षि[15a]तिगर्भयमान्तकाचलानां वैरोचनः । ३ ।

शब्दवज्राखगर्भप्रज्ञान्तकटक्किराजानां रत्नेशः । ४ ।

पाण्डरा[19]गन्धवज्रालोकेश्वरपद्मान्तकनीलदण्डानाममिताभः । ५ ।

तारारसवज्रास्पर्शवज्राविष्कम्भिविघ्नान्तकमहाबलानाममोघसिद्धिरिति । ६ ।

॥ इति पिण्डीक्रमोक्ताक्षोभ्यमण्डलम् ॥

---

1 B °शुक्र° C शूक । "सूचिक" is variously spelt in the MSS as शूक, शूचिक, सूक, शुक, सुक, etc. 2 C omits °रक्त° 3 C °नो 4 B °त्न° 5 B °न्द° 6 C °काञ्जे 7 B °वं 8 B °ज्ञा° 9 C °त्त्वात् 10 B भूँ 11 C ताँ 12 B ञ्रँ 13 B भूँ 14 B ह 15 B स्वँ 16 C थ्रीँ 17 B भूँ 18 C रीँ 19 B °ण्डुला.

## [ अथ श्रीसम्पुटतन्त्रोक्तवज्रसत्त्वमण्डलम् । ]

श्रीसम्पुटतन्त्रोक्तवज्रसत्त्वमण्डले तु वज्रपञ्जरा[1]भ्यन्तररक्षाचक्रनाभिगर्भेऽनिलानलजलभूमण्डलसुमेरूपरि धर्मोदयोदरे[2] कूटागारम् ।

रक्षाचक्रे तु यमारिः सव्यैस्त्रिभिर्भुजैर्वज्राङ्कुश[15b]चक्रवज्राणि दधानः, वामैस्त्रिभिर्हृद्गतसतर्जनीकपाशघण्टापरशून् । १ ।

प्रज्ञान्तको वज्रपाशं वज्रखड्गं च हृदि तर्जनीं परशुपाशं च । २ ।

[ पद्मान्तको निगडपद्मखड्गं च घण्टापरशुपाशं च । ३ ।

विघ्नारिर्वज्रघण्टाविश्ववज्रचक्रं च तर्जनीपाशमुशलपरशुं च । ४ ।

अचलः खड्गचक्रवज्रं च तर्जनीपरशुपाशं च । ५ । ]

टक्किराजः सव्येतरकरद्वयेन वज्रहुँकारमुद्रामङ्कुशखड्गवज्रपाशं च । ६ ।

नीलदण्डो वज्राङ्कनीलदण्डखड्गचक्राणि हृदि तर्जनीपाशं पद्मं परशुं च । ७ ।

महाबलस्त्रिशूलखड्गचक्राणि हृदि तर्जनीपाशं पद्मं परशुं च । ८ ।

उष्णीषचक्रवर्त्ती मूर्ध्नि सव्येतरकरद्वयोष्णीषमुद्रां[3] चक्रं पद्मं च खड्गौ च । ९ ।

सुम्भो वज्रचक्रर[16a]त्नानि हृदि तर्जनीपाशं पद्मं खड्गं च । १० ।

एते दश शिरसि पञ्चकपालमण्डिताश्चक्रयादिपञ्चमुद्रिणो गलावलम्बिमुण्डमालिनो यथाक्रमं वैरोचनरत्नेशामिताभामोघाक्षोभ्यमुद्रिता इति ।

कूटागारगर्भे[4] वज्रधरः सस्मितेषद्रक्तानुविद्धसितवर्णः[5] कृष्णजटाजूटो निविष्टमणिविश्वकुलिशादधो वामवलयि[6]तार्धसुधांशुपञ्चबुद्धमु[7]कुटललाटोपरि पञ्चकरोटकचक्री[8]कुण्डलकण्ठिरुचकमेखलाभस्मविभूषितस्त्रिमुखो नीलरक्तसव्ये[16b]तरवक्त्रः[9] प्रतिमुखं त्रिनेत्रः षड्भुजो वज्रघण्टाविराजितभुजाभ्यामा[10]लिङ्गितस्वाभप्रज्ञासरोरुहद्वन्द्वानन्दितः सव्यकराभ्यां कृपाणाङ्कुशवरौ वामाभ्यां कपालपाशभृत् सूर्यप्रभामण्डली विश्वकपाल[11]चन्द्रेऽर्धपर्यङ्केण नवनाट्यरसैस्ताण्डवी ।

---

1 B °रत्ना° 2 B °ले and adds कूटागारोदरे । 3 C adds च 4 B °र्भे° 5 C °र्णे° 6 Mss °लि° 7 C °म° 8 C °क्रि° 9 C °त्र: 10 C °जंग्या° 11 C °लं.

तद्धृदि विश्वाब्जेन्दौ ज्ञानसत्त्वो रक्तसितः सत्त्वपर्यङ्की स्फुरत्पञ्चबुद्धमुकुटी रत्नाभरणः सवज्रघण्टाद्वि[ भुजा ]क्रोडितस्वाभप्रज्ञः। तद्धृदि तु विधौ कृष्णहूँकाररूपः समाधिसत्त्वः।

अस्य त्रिसत्त्वात्मकव[ 17a ]ज्रधरस्य पूर्वे[1] वैरोचनः शुभ्रः सौम्यश्चतुर्भुजः सव्याभ्यां चक्रघण्टे[2] वामाभ्यां कपालपाशौ दधानः।

दक्षिणे रत्नेशः पीतश्चतुर्भुजः सव्याभ्यां रत्नाङ्कुशौ वामाभ्यां कपालपाशौ।

पश्चिमेऽमिताभो रक्तवर्णश्चतुर्भुजः सव्याभ्यां बाणपद्मे वामाभ्यां धनुःपाशौ।

उत्तरेऽमोघसिद्धिर्हरितः सव्याभ्यां वज्राङ्कुशौ वामाभ्यां घण्टाकपालौ।

ई[3]शाने लो[4]चना शुक्लाऽष्टभुजा सव्यैश्चक्रवज्रखड्गबाणान् वामैः कपालघण्टापाशधनूंषि।

आग्नेये [ 17b ] मामकी नीला द्वादशभुजा दक्षिणैर्बाणखड्गवज्रचक्ररत्नपद्मानि वामैर्धनुरङ्कुशघण्टापाशकपालखट्वाङ्गानि।

नैर्ऋत्ये[5] पाण्डरा[6] रक्ताऽष्टभुजा दक्षिणै[7]र्बाणपद्मखड्गवज्राणि वामैर्धनुःकपालपाशघण्टाः।

वायव्ये तारा हरिताऽष्टभुजा सव्यै[8] रक्तोत्पलखड्गाङ्कुशबाणानितरै[9]श्चक्रपाशकपालधनूंषि।

द्वितीयपुटे पूर्वस्यां दिशि वज्ररौद्री शुभ्रा बाणमङ्कुशञ्च धनुः शुक्रपूर्णकपालञ्च।

दक्षिणस्यां वज्रबिम्बा पीता [ 18a ] वज्रं शूलञ्च पाशं रक्तपूर्णकरो[10]टञ्च।

पश्चिमायां रागवज्रा रक्ता खड्गं वज्रञ्च वारिपूर्णकपालं घण्टाञ्च।

उत्तरस्यां वज्रसौम्या हरिता पिट्टि[11]नीं त्रिपताकाञ्च वज्रखट्वाङ्गं कपालञ्च।

ऐशान्यां वज्रयक्षी सितपीता दण्डं मुसलञ्च कपालं डमरुञ्च।

आग्नेय्यां वज्रडाकिनी पीतरक्ता पद्मं दर्पणञ्च मे[12]दपूर्णकपालं परशुञ्च।

नैर्ऋत्यां शब्दवज्रा रक्तनीला शक्तिं शङ्खञ्च चक्रं रक्तपूर्णकपालञ्च।

वायव्यां पृथ्वीवज्रा हरितसिता कमलं कुलिशञ्चामृतपरि[ 18b ]पूर्णनरचर्म्माच्छादितकपालं घण्टाञ्च।

---

1 C °र्वै 2 B °ण्टा 3 C ऐ 4 °रो. The correct name of the goddess seems to be रोचना instead of लोचना। रोचना is appropriate as she is the female counterpart of Vairocana. 5 B ते 6 B °ला 7 B °णे 8 C °वैं 9 B °लै° 10 B °टकं 11 B °ट्टि° 12 B म°

एता अष्टौ[1] चतुर्भुजाः प्रथमचिह्नद्वयं सव्याभ्यामपरद्वयं वामाभ्यां बिभ्रत्यः ।

तृतीयपुटे प्राच्यां दिशि हास्या रक्ता सवज्रवज्र[2]घण्टहास्याभिनयकरद्वया ।

अवाच्यां लास्या नीला वज्रवज्रघण्टाधारिसगर्व[3]लास्याभिनयभुजयुग्मा ।

प्रतीच्यां गी[4]ता शृङ्गारेण का[5]यमीषच्चालयन्ती ।

उदीच्यां नृत्या हरिता कमलाभिनयादिनृत्यव्यग्रधृतत्रिशूलवज्रघण्टाकरद्वया ।

ऐ[6]शान्यां वंशा र[19a]क्ता । १ ।

आग्नेय्यां वीणा पीता शृङ्गारेण कायमीषच्चालयन्ती । २ ।

नैर्ऋत्यां मुकुन्दा सिता । ३ ।

वायव्यां मुरजा धूम्र[7]वर्णा । ४ ।

एताश्चतस्रः स्वस्ववाद्यवादनपरकरद्वयाः ।

ततो बाह्यपट्टिकायामाग्नेय्यां पुष्पा शुक्ला पुष्पमालाधारिवामेतरभुजा ।

नैर्ऋत्यां धूपा धूम्रवर्णा धूपकटच्छुरत्नग्राहिहस्ता ।

वायव्यां दीपा कनकवर्णा धृतदीपयष्टिपद्मवामसव्यभुजा ।

ऐशान्यां गन्धा रक्ता रक्तगन्धशङ्खखड्गधारिवामेतरकरा ।

प्राच्यामादर्शा श्वेता [19b] दर्पणभृद्भुजयुग्मा ।

अवाच्यां रसा रक्ता धृतरसपात्रहस्तद्वया ।

प्रतीच्यां स्पर्शा हरिता विश्ववस्त्रभृद्भुजद्वया ।

उदीच्यां धर्मा धवला धवलधर्मोदया[8]धारिकरद्वया ।

एताश्च वैरोचनादयो देवता एकवक्त्रास्त्रिनेत्राः कृष्णजटामुकुटिन्यः पञ्चकरोटका[9]द्यलङ्कृता दिव्यवाससोऽर्धपर्यङ्केण ताण्डविन्यः ।

पूर्वद्वारे वज्राङ्कुशी गगनश्यामा कृष्णसितसव्येतरवक्त्रा षड्भुजा सव्यैरङ्कुशखड्गचक्राणि बिभ्रती[10] वामैः पाशतर्जनीघण्टाः । १ ।

दक्षिणे[20a] वज्रपाशी[11] पीता कृष्णसितसव्येतरमुखी षड्भुजा सव्यैः पाशवज्रखड्गान् वामैश्चक्रघण्टासतर्जनीपाशान् । २ ।

---

1 B °ते° 2 B omits the second °वज्र° 3 B °र्वा 4 C शी° 5 B °हाय° 6 B ई° 7 B °म° 8 B °य° 9 B °क्या° 10 B °ति 11 B °णी

पश्चिमे वज्रस्फोटा रक्ता कृष्णसितसव्येतरमुखी षड्भुजा सव्यैर्निगडवज्रासीन् वामैश्चक्रघण्टाङ्कुशान् । ३ ।

उत्तरे वज्रघण्टा हरिता कृष्णसितसव्येतरवदना षड्भुजा सव्यैर्घण्टावज्रासीन् वामैश्चक्राङ्कुशपाशान् । ४ ।

एताश्चतस्रः प्रतिवक्त्रं त्रिनेत्रा[1] ज्वलदूर्ध्वकपिलकुन्तलाः पञ्चकपालचक्रया[2]दिभूषणा व्याघ्रचर्माम्बराः प्रत्यालीढेन[3] नृत्यन्त्यो विश्वाब्ज[20b]कपालसूर्ये । रत्नसम्भवामिताभामोघसिद्धयो[4]ऽपि विश्वाब्जकरोटर[5]वौ । अन्यास्तु सर्वा देवता विश्वसरोजकरोटचन्द्रस्थाः । सूर्यप्रभास्तु सर्वा एव ।

अत्र वज्रसत्त्व एव सत्त्वप्रज्ञः । अन्यास्तु सर्वा देवता निष्प्रज्ञा इत्येकः पक्षः । सत्त्वाभप्रज्ञा इति द्वितीयः ।

कुलेशस्तु वज्रसत्त्वादितथागतानां मामकीशब्दवज्रागीतास्पर्शवज्राधर्मधातुवज्राणामक्षोभ्यः ।

लोचनावज्ररौद्रीपृथ्वीवज्रापुष्पाहास्यावंशावज्राङ्कुशीनां वैरोचनः ।

वज्रडाकिनीवज्रबिम्बाधू[21a]पालास्यावीणावज्रपाशीनां रत्नसम्भवः ।

पाण्डरावज्ररागीदीपागन्धामुकुन्दावज्रस्फोटानाममिताभः ।

तारावज्रसौम्यावज्रयक्षीनृत्यारसामुरजावज्रघण्टानाममोघसिद्धिः ।

हृद्बीजानि वज्रसत्त्वादीनां मण्डलन्यासक्रमेण हूँ वूँ आँ ह्रीँ खँ भ्रूँ ह्रीँः ताँ अँ आँ इँ ईँ उँ ऊँ अँ अः ऋँ लृँ आँ ॠँ ॡँ नँ लँ ओँ औँ एँ ऐँ[6] जः हूँ वँ होः[7] इति । हृदयमन्त्रो वज्रमन्त्रो वा वज्र[8]सत्त्वस्य ओँ[9] वज्रामृत महासुख हूँ[10] स्वाहा इति । वज्रघण्टाया ओँ आः वज्रघण्टे होः[11] हूँ स्वाहेति सार्व[21b]कार्मिकमन्त्रः ।

निष्पन्नक्रमयोगिनश्चक्रेश[12]हृन्मन्त्रैः साध्यानि सिध्यन्तीति न ते लिखिता ग्रन्थविस्तरत्रासाच्च । एवं प्रागुत्तरत्र च वेदितव्यमिति ।

॥ इति श्रीसम्पुटतन्त्रोक्तवज्रसत्त्वमण्डलम् । ॥

---

1 B °त्रं 2 B °क्रा° 3 B °ढन् 4 B द्धिः अ° 5 B य° 6 C ऐँ एँ 7 B हाँ
8 B omits वज्र° 9 B ओँ आँ 10 B भूँ 11 B हाः 12 B °ण

## [ अथ ज्ञानडाकिनीमण्डलम् । ]

ज्ञानडाकिनीमण्डले वज्रपञ्जराभ्यन्तरविश्वपद्मविश्ववज्रनाभिस्थकूटागारमध्ये[1] श्वेतच्छत्रे सिंहस्थविश्वाब्जसूर्ये ज्ञानडाकिनी नीला[2]स्या मुकुटं पट्टबद्धमुपरि[3] वज्राङ्कं स्फुरत्पञ्च[4]बुद्धैर्मण्डितं मूलमुखं क्रुद्धं साट्टहासं सव्यं शुक्लं हसद्वामं रक्तशृङ्गारं प्रतिमुखं त्रि[22a]नेत्राणि। दक्षिणभुजत्रये उर्ध्वी[5]कृतखट्वाङ्गं परशुं वज्रञ्च वाम[6]त्रये घण्टारक्तपूर्णकपालखड्गाः ।

अस्याः पूर्वस्यां दिशि वज्रडाकिनी शुक्ला शृङ्गाररसा । १ ।

उत्तरस्यां दिशि घोर[7]डाकिनी सु[8]वर्णवर्णा । २ ।

पश्चिमायां वेताली नीला । ३ ।

दक्षिणस्यां चण्डाली रक्ता । ४ ।

एता अपि चतस्रः सिंहस्थविश्वाब्जसूर्यस्था ऊर्ध्वीकृतखट्वाङ्गरक्तपूर्णकपालाञ्चि[9]तसव्यकरद्वया ।

ऐ[10]शान्यां सिंहिनी सिंहवक्त्रा सितपीतवामस[12]व्यार्धार्धशरीरा श्वेतदन्तीन्द्रे । १ ।

आग्नेय्यां व्या[22b]घ्री व्याघ्रवक्त्रा नीलसितवामदक्षिणार्धार्धदेहा सप्तरत्नराशौ । २ ।

नैर्ऋत्यां जम्बुकी[13] जम्बुकमुखी रक्तकृष्णसव्यवामार्धार्धशरीरा महिषे । ३ ।

वायव्यामुलू[14]की उलूकवक्त्रा पीतरक्तवाम[15]सव्याङ्गाऽष्टफणीन्द्रपृष्ठे[16]षु । ४ ।

एताश्चतस्रो वज्राङ्कुशसतर्जनीकवज्र[17]पाशभूषितसव्यवामभुजयुग्मा विश्वाब्जसूर्यस्थाः।

ततः पूर्वद्वारे राजन्ती सिता हस्तद्वयाञ्जलिं मुखे प्रक्षिपन्ती । १ ।

उत्तरे दीपिनी पीता मूर्ध्नि सम्पुटाञ्जलिं दीपमिव धारयन्ती । २ ।

पश्चिमे चू[18]षिणी रक्ता रक्त[23a]पूर्णमञ्जलिमूर्ध्वीकृत्य मुखसमीपे संस्थाप्य रुधिरधारां पिबन्ती । ३ ।

दक्षिणे काम्बो[19]जी कृष्णा वज्राञ्जलेरङ्गुष्ठाग्रद्वयं परस्परं संयोज्य तर्जनीद्वयं सूच्या भगस्थानस्थितया स्वभगमुपदर्शयन्ती । ४ ।

---

1 B °ध्य° 2 B °लो अ° 3 B °द्रादि° 4 B °ञ्जर° 5 B ऊर्ध्वत° 6 B °मे 7 B °ल° 8 B स° 9 B °र्चि° 10 B ई° 11 B वाम° 12 C न्तोर्धे: 13 B omits 14 B °स° 15 B °मे 16 C °प्रच्छे° B °पक्षे° 17 C °च° 18 B च° 19 B क°

एताश्चतस्रो विश्वाब्जस्थप्रेतहृदि सूर्यस्था: । वज्रडाकिन्यादयो द्वादश त्रिनेत्रैकवक्त्राः । त्रयोदशापि देव्यो रक्तदिव्यवस्त्राः शिरसि पञ्चकपालमालिन्य: पञ्चमुद्रिण्य: सत्त्वपर्यङ्किण्योऽष्टभुजगै[1]राविराजिता: कल्पान्तज्वलज्ज्वालाभिरिव रश्मिराशिज्वालाभिर्भीषणा: ।

यथाक्रममक्षोभ्य[23b]शाश्वतरत्नेशामिताभामोघसिद्धयक्षोभ्यशाश्वतरत्नेशामिताभामोघसिद्धिभिर्मुद्रिता: ।

हूँ हुँ हुँ हुँ हुँ आँ ईँ ऊँ ॠँ ल्लृँ ऐँ औँ अ: इत्यासां हृद्बीजानि । ओँ ह्रीः[2] स्वाहेति ज्ञानडाकिन्या हृदयमन्त्रः । ओँ वेता[3]ली हूँ स्वाहेति वेताल्या: सार्वकर्मिकमन्त्र: ।

॥ इति ज्ञानडाकिनीमण्डलम् ॥

---

1 B °ग° 2 B जीँ 3 B °त्ता°

## [ अथ सप्तदशात्मकहेवज्रमण्डलम् । ]

सप्तदशात्मकहेवज्रमण्डले वज्रपञ्जरोदरधर्मोदयागर्भस्थकूटागारस्य मध्ये विश्वाब्जकर्णिकास्थित[1]शव[2]हृदयस्थरक्तपूर्णकपालोपरि सूर्ये हेवज्रास्त्रय: चतुर्थस्तु शवरहित: ।

तत्र त्रैलोक्याक्षेप: कृष्णो विश्ववज्राङ्क[24a]पिङ्गोर्ध्वमूर्धज: पञ्चकपालपणमुद्रार्द्रनरशिरोमालामण्डित: पश्चाद्भागोपरिधृतव्याघ्रचर्माम्बरो वामोरौ दक्षिणचरणाग्रं संस्थाप्यार्धपर्यङ्की रक्तवर्त्तुलत्रिनेत्रैकमुखो द्विभुजो वज्राङ्कितरक्तपूर्णकपालभृ[3]द्वामकरा[4]क्रोडितवक्ष्यमाणरूपनैरात्माहननाभिनयधृतपञ्चसूचिकवज्रोद्दण्डसव्यभुज: ।

अथवा चतुर्भुजो द्विभुजवत् । अपरभुजाभ्यां स्वाभवज्रवाराहीसमालिङ्गित इत्येव विशेष: ।

अथवा षड्भुज: कृष्ण: कृष्णसितरक्तत्रिमुख: प्रतिमुखं त्रिनेत्रो जटामुकुटमण्डितो[24b] वामैर्वज्रघण्टां धनु: कपालं च दधान:, सव्यैर्वज्रं बाणं त्रिशूलं च, वज्रवज्रघण्टान्वितहस्ताभ्यां स्वाभवज्रशृङ्खलामालिङ्गित:, अ[5]परं तु यथायोगमस्य पूर्ववत् ।

एवं हेरुकत्रयस्य पूर्वादिदलेष्वष्टौ वज्रगौर्य्यादय: ।

आभ्यो बहिरैशान्यादिकोणेषु वंशावीणामुकुन्दा[6]मुरजाश्च ।

पूर्वादिद्वारेषु वज्राङ्कुशीवज्रपाशीवज्रस्फोटीवज्रघण्टाश्चेति षोडश देव्य: पूर्ववत् । निरु[7]पाया एवैता: ।

हेरुकत्रयस्य कुलेशोऽ[8]क्षोभ्यो हृद्बीजं हूँ । हृदयमन्त्र: ओँ आ: हूँ ह्रीँ: स्वाहा ।

प्रत्येकमन्त्रस्तु[9] यथाक्रमं ओँ त्रैलोक्याक्षेप हूँ हूँ[25a] फट् स्वाहा, ओँ ज्वल ज्वल[10]भ्यो हूँ हूँ हूँ फट् स्वाहा, ओँ किटि किटि वज्र हूँ हूँ हूँ फट् स्वाहा ।

चतुर्थो हेवज्र: षोडशभुजो[11]ऽक्षोभ्यमुद्रितो[12] नैरात्मासमापन्न: । किन्त्वस्य चत्वारो मारा: प्रागुक्तशवस्थाने । तत्र स्कन्धमारो रूप[13]तो ब्रह्मा पीत: क्लेशमारो विष्णु: कृष्णो मृत्युमारो महेश्वर: शुभ्रो देवपुत्रमार: शक्रो गौर: । तेषु भगवान् द्वाभ्यामर्धपर्यङ्कवान् अपराभ्यामालीढस्थ इति चतुश्चरण: कृष्णो विश्ववज्राद्यम्बरान्तोक्तविशेषणचतुर्विंशतिस्त्रिनेत्रोऽष्टास्य: । मुखन्तु मूलं कृष्णं हसत्[14] सव्यं शुक्लं वामं रक्तमूर्ध्वं विकटदंष्ट्रं शेषानि कृष्णानि । द[25b]

---

1 B ते 2 B °सर्व°, C °शब्द° 3 C °हृ° 4 B °रे 5 B ता, C तो 6 B °ण्डा 7 C °रू° 8 B °शा° 9 B °न्तु 10 B omits 11 B °जा° 12 B °ता 13 B °प्य° 14 B °न्तं

क्षिणभुजेषु वज्रं खड्गं[1] बाणं चक्रं चषकं दण्डं त्रिशूलमङ्कुशं च, वामेषु घण्टां पद्मं धनुरुद्यतखट्वाङ्गं कपालं रत्नं तर्जनीपाशं च ।

पूर्वस्मिन् दले गौरी गौरवर्णा सव्यभुजयोराकृष्यमाणबाणं वज्रकर्त्रिं[3] च, वामयोर्धनुः सरोहितमत्स्यरक्तभृत्कपालं च ।

दक्षिणे चौरी रक्ता वज्रं[4] डमरुं चाङ्कुशं सशूकररक्तभृत्कपालं च ।

पश्चिमे वे[5]ताली सितवलितपीतवर्णा खड्गं सकूर्मरक्तपूर्णकपालं च मद्यपूर्णकरोटकं मूत्रपूर्णकरोटकं च ।

उत्तरे घस्मरी हरितपत्पीता मेदः[6]पूर्णकपालस्थसर्पमभ[26a]यमुद्रां च वज्राङ्किताग्निकुण्डं परशुं च ।

ईशाने पुक्क[7]सी पीता मांसपूर्णकपालस्थसिंहं वरदमुद्रां च कल्पवृक्षलतां रत्नं च ।

आग्नेये शबरी[8] सिता सशुक्लकपालस्थभिक्षुं वज्रं च खट्वाङ्गं पाशं च ।

नैर्ऋत्ये चण्डाली नीला रक्तभृत्कपालस्थव्याघ्रं सव्ये वामे पुण्डरीकं द्वयो[9]र्वातपुटम् ।

वायव्ये डोम्बिनी कृष्णा चषकमुद्यतत्रिशूलं च पञ्चामृतकपालस्थजम्बुकं लाङ्गलं च ।

आभ्यो बहिःकोणेषु वंशाद्याश्चतस्रः पूर्ववत् ।

पूर्वद्वारे हयास्या कृष्णा मुखानि कृष्णसितपीतान्यूर्ध्वमश्वमुखं हरितम् ।

दक्षिणे शूकरा[10]स्या पीता[26b]मुखानि पीतकृष्णसितान्यूर्ध्वे शूकरा[11]स्यं रक्तम् ।

पश्चिमे श्वानास्या रक्ता रक्तकृष्णसितानि वक्त्राण्यू[12]र्ध्वे श्वमुखं पीतम् ।

उत्तरे सिंहास्या हरिता मुखानि हरितकृष्णसितान्यूर्ध्वे सिंहवक्त्रम् ।

एवं मूलसव्येतरोर्ध्व[13]क्रमेण चतुर्वदना द्वारपालाश्चतुर्भुजा वज्राङ्कुश्यादिवाचिह्नभृतो विश्वाब्जरक्तपूर्णकपालसव्येषु प्रत्यालीढस्था ज्वलत्कपिलोर्ध्वकेशाः ।

अन्यास्तु देवता अर्धपर्यङ्किन्यः सर्वास्त्रिनेत्राः प्रतिमुखं निरुपायाः पञ्चमुद्राद्यलङ्कृताः ।

भगवतो हृद्बीजं हूँ । हृदयमन्त्रः ओँ देव पिचुवज्र हूँ हूँ हूँ फट् स्वाहा । घ[27a]स्मर्य्याः ओँ ओँ स्वाहेति मन्त्रः सार्वकर्मिकः ।

॥ इति सप्तदशात्मकहेवज्रमण्डलम् ॥

---

1 C °ड्ग° 2 B °श्च° 3 C °त्रिं° 4 B °क्तवर्गजं 5 B वै° 6 B °दाः 7 B °ष्क्क° 8 B शाबली 9 C °या 10 B श्रुक्रा° 11 B °कुशा° 12 C °णि ऊ° 13 B °तर°

## [ अथ नैरात्मामण्डलम् । ]

नैरात्मामण्डले वज्रपञ्जरान्तर्धर्मोदयागर्भस्थकूटागारमध्ये विश्वपद्मस्य कर्णिकायां नैरात्मा ।

पूर्वादिदिग्दलेषु वज्रागौरीवज्रडाकिन्य: ।

द्वितीयपुटे विश्वपद्मेषु पूर्वादिषु गौरीचौरीवेतालीघस्मर्य: ।

ऐशान्यादिषु पुक्क[1]सीशबरीचण्डालीडोम्ब्य:[2] ।

नैरात्माया ऊर्ध्वे पूर्वपार्श्वेऽब्जे खेचर्यूर्ध्वमुखी । अध:[3] पश्चिमपार्श्वे भूचर्यधोमुखी ।

इह बाह्यपुटस्था गौर्यादयोऽष्टौ षोडशभुजमण्डलव[27b]र्त्तिन्य:[4] पीतादि[5]वर्णा: । अन्या: सप्त नीला: । पञ्चदशाप्यर्धपर्यङ्केण सरोज[6]चन्द्रस्था रक्तत्रिनेत्रैकवक्त्रा: पिङ्गो[7]र्ध्वमूर्धजा व्याघ्रचर्माम्बराश्चतुर्भुजा: । सव्याभ्यां वज्रं कर्त्रिञ्च वामाभ्यां कपालमूर्ध्वखट्वाङ्गं च दधाना: शिर:पञ्चकपालमाला: पञ्चमुद्रिण्य: ।

कोणेषु वंशाद्याश्चतस्र: पूर्ववत् ।

पूर्वद्वारे हयास्या सितनीला । १ ।

दक्षिणे शूकरास्या पीतनीला । २ ।

पश्चिमे श्वानास्या रक्तनीला । ३ ।

उत्तरे सिंहास्या रक्तनीला । ४ ।

चतस्रोऽप्येता: प्रत्यालीढेन सूर्यस्था: कर्त्रिकपालभृत्सव्ये[28a]तरभुजद्वया नामानुरूपैकवक्त्रा द्वि[8]वर्णा अपर[9]विशेषणमासां नैरात्माया इव ।

नैरात्मादीनां यथाक्रममक्षोभ्यशाश्वतरत्नेशामिताभाक्षोभ्यशाश्वतरत्नेशामिताभामोघसिद्धि[ अक्षोभ्यशाश्वतरत्नेशामिताभाक्षोभ्यशाश्वतरत्नेशामिताभामिताभ ][10]वैरोचनैर्मुद्रणम् ।

वंशादीनां हयास्यादीनां च वैरोचनरत्नेशामिताभाऽमोघसिद्धय: ।

नैरात्माया हृद्बीजं अँ । ओँ अँ स्वाहेति हृदयम् । ओँ ओँ स्वाहेति घस्मर्या: सार्वकार्मिकमन्त्र: ।

---

1 B °च्क° 2 B °म्बा: 3 B °र्ध° 4 B °र्त्ते° 5 B °तानील° 6 C शवार° 7 B °ङ्गलो° 8 C °दि° 9 B °रं 10 The bracketted portion is omitted in B.

अथवा नैरात्मादिपञ्चदशदेव्यात्मकमण्डलम् । तत्र सर्वा देव्यः कृष्णाः कर्त्रिकपाल-भृत्सव्येतरक[28b]रद्वया यज्ञोपवीतयोगेन सखट्वाङ्गाः । अपरं पूर्ववत् ।

ॐ आः वज्रघस्मरि ॐ हूँ स्वाहेति घस्मरिमन्त्रः ।

यदि तु[1] मण्डलेशा कुरुकुल्ला रक्ता चतुर्भुजा बाणाङ्कुशौ सव्याभ्यां रक्तोत्पलधनुषी वामाभ्यां बिभर्त्ति । त्रिनेत्रैकवक्त्राऽमिताभ[2]कुले[3]शा ।

वज्राद्याश्चतुर्दश रक्तवर्णाः शरधनुकरद्वयाः ।

पञ्चदशापि रक्ताब्जश[4]वोरश्चन्द्रस्था अर्धपर्यङ्केण ।

कुरु[5]कुल्लाया हृद्बीजं ह्रीँः । ॐ कुरुकुल्ले ह्रीँः स्वाहा । अपरं पूर्ववत् । तदा कुरुकुल्ला-मन्त्रं भवति ।

॥ इति नैरात्मामण्डलम् ॥

---

1 B यत्तु  2 °भा°  3 B °लि°  4 B स°  5 B °ल°

# [ अथ वज्रामृतमण्डलम् । ]

वज्रामृतमण्डले पञ्जरा[29a]न्तर्धर्मोदयागर्भस्थकूटागारस्य मध्ये विश्वाब्जस्य वरटेन्दौ[1] श्रीवज्रामृतः सत्त्वपर्यङ्की प्रियङ्गुश्यामः सितरक्तमूलसव्यवाममुखत्रयो विचित्रकटककेयूरा[2]दिभिर्वस्त्रैश्चालङ्कृतः षड्भुजः सवज्रघण्टाभुजयुग्मालिङ्गितस्वाभप्रज्ञः सव्याभ्यां चक्रासी वामाभ्यां पाशाङ्कुशौ बिभ्राणो[3] रक्तप्रभामण्डलः शान्तशृङ्गाररसराशिः ।

पूर्वदले सौम्या सितासितकृष्णरक्तवक्त्रत्रया ।

दक्षिणे सौम्यवदना पीतापीतसितरक्तत्रिवदना ।

पश्चिमे चा[4]न्द्री रक्तारक्तकृष्णसितत्रिवदना ।

उत्तरे शशिनी[5][29b]हरिताहरितसितारुणत्रिमुखा ।

आग्नेये शशिमण्डला नीलानीलसितारुणत्रिमुखा ।

नैर्ऋत्ये शशिले[6]खा प्रियङ्गुश्यामा प्रियङ्गुश्यामसितारुण[7]मुखी ।

वायव्ये मनोज्ञा नीलोत्पलवर्णा नीलसितरक्तत्रिवक्त्रा ।

ऐशाने मनोह्लादनकरी सुवर्णवर्णा तद्वर्णशुक्लरक्तत्रिमुखी ।

एता देव्यश्चक्रेशवत् षड्भुजाश्चक्रेशवाच्चिह्नभृतः । किन्तु चक्रस्थाने चन्द्रमण्डलं बिभ्रत्यः । शशिलेखा त्वेकां चन्द्रकलाम् ।

द्वितीयपुटे ईशानकोणे पुष्पा शुक्ला कृष्णरक्तवदनत्रया ।

आग्नेये धूपा[8] धूम्र[9]वर्णा धूम[30a]सितारुणत्रिमुखा ।

नैर्ऋत्ये दीपा हेमवर्णा कनकसितकृष्णमुखत्रया ।

वायव्ये गन्धा रक्ता रक्तकृष्णश्वेतत्रिवक्त्रा ।

एता यथाक्रमं सव्यप्रधानकरेण पुष्पकरण्डकधूपकटच्छुकदीपयष्टिगन्धशङ्खधारिण्यः शेषकरैर्नायकचिह्नभृतः ।

पूर्वादिपट्टिषु वंशावीणामुकुन्दा[10]मुर[11]जाः रक्तपीतसितधूम्रवर्णा वंशादिवादनपरा द्विभुजैकवक्त्राः ।

पूर्वद्वारे भ्रकुटीतरङ्गा नभःश्यामा श्याम[12]सितरक्तत्रिमुखा ।

---

1 B °न्द्रौ 2 B °कटकेयूरो° 3 B °णा 4 B च° 5 B °शरी 6 B °रे° 7 B °मारुणसित° 8 B °मा 9 B °म° 10 B °ण्डा 11 C °रु° 12 B omits श्याम°

दक्षिणे भयभीषणः सितकृष्णरक्तत्रिवक्त्रः ।

पश्चिमे हयरूपा रक्तसितकृष्णत्रिमुखा ।

उत्तरे गण[1]ना[30b]यको हरितसितारुणत्रिमुखः ।

एता ललितक्रोधा ललितपदन्यासेन निषण्णाश्चक्रेशचिह्नधारिण्यः प्रधानसव्यकरेण परं यथाक्रमं अङ्कुशपाशनिगड[2]घण्टामृत ईषद्दंष्ट्राकरालिन्यः ।

इह चक्रेशः प्रतिबिम्बित[3]पञ्चतथागतवज्राङ्कितविचित्ररत्नमुकुटी । तदपर[4]विंशतिदेवतास्तु वज्रामृतपुष्टकाकरत्नमुकुटिन्यश्चन्द्रस्थाः प्रभुरिव विचित्रवस्त्ररत्नाभरणादिकाः । पुष्पादिद्वादशानान्तु चन्द्राधो विश्वसरोजानि ।

वज्रामृतस्य हृद्बीजं हः । ओँ हः वज्रामृत[5] स्वाहेति हृद[31a]यम्, सार्वकर्मिकश्चेदम् ।

अपरवज्रामृतत्रयस्यै[6]वम्प्रकारभावनाक्रमो वज्रामृततन्त्रे वेदितव्यः । विस्तरत्रासादत्र नोक्तम् ।

॥ इति वज्रामृतमण्डलम् ॥

---

1 C गगन° 2 B °द° 3 B °विचित्र° 4 B °रि 5 B °ते 6 B °स्ये°

# [ अथ नवात्मकहेरुकचतुष्टयमण्डलम् । ]

नवात्मकहेरुक[1]चतुष्टयस्य मण्डले वज्रपञ्जराभ्यन्तरे धर्मोदयाकूटागारम् । षोडशभुजस्य पुनर्मञ्जुवज्रमण्डलमिव दशारचक्रमप्यस्तीति द्वितीयः पक्षः । कूटागारस्य मध्ये विश्वाब्जस्य कर्णिकोपर्युत्ता[2]नह[3]रिहरहिरण्यगर्भपुरन्दररूपमारचतुष्टयहृदयस्थसूर्ये चतुश्चरणो नग्नो नवनाट्यरसैः पादाभ्यामर्धपर्यङ्किना[31b]पराभ्यामालीढपदेन नृत्यन् विश्ववज्राङ्कज्वलदूर्ध्वकपिलकुन्तलो ललाटोपरि निःस्तब्धि[4]तपञ्चमुण्डमण्डितः पञ्चबुद्धमुकुटी कृष्णवर्णः षोडशभुजोऽष्टास्यः प्रतिमुखं रक्तवर्त्तुलत्रिनेत्रः, मूलमुखं कृष्णं सव्यानि सितकृष्णकृष्णानि वामानि रक्तकृष्णकृष्णानि ऊर्ध्वं धूम्रवर्णं विकृतं, सर्वमुखानि सभ्रूभङ्गभ्रुकुटीकारिदंष्ट्रोत्कट[5]करालानि । सव्याष्टकरैः कबलि[6]तकपालेषु हस्त्यश्वखरगवोष्ट्रमनुष्यसरभोल्लूकाः[7] वामाष्टकर[8]कपालेषु पृथ्वीवरुणवायुतेजश्चन्द्रादित्ययमधनदाः । चक्रि[32a]कुण्डलकण्ठिरुचकमेखलाभस्मानि सार्द्र[9]पञ्चाशन्नरशिरःश्रेणिकेयूरनूपुराणि च भूषणानि ।

अस्य प्रज्ञा नैरात्मा नग्ना कृष्णा कर्त्रि[10]कपालाञ्चि[11]तसव्यवामभुजाभ्यां भगवन्तमालिङ्ग्य प्रत्यालीढेन नृत्यन्ती पञ्चमुद्रिणी रक्तवर्त्तुलत्रिनेत्रदंष्ट्राकरालैकमुखी ज्वलदूर्ध्वपिङ्गलकेशी ललाटतटस्थपञ्चमुण्डगलावलम्बि[12]शुष्कनृमुण्डमालानूपुरादि[13]भूषिता ।

पूर्वादिदिग्दलस्थब्रह्मेन्द्रोपेन्द्ररुद्रहृ[14]दुपरि चन्द्रेषु गौर्यादयः । ईशानादिदलस्थयमकुबेरनैर्ऋतिवेमचित्रिहृदयेन्दुषु पुक्कस्या[15]दयः[32b] ।

तत्र गौरी कृष्णा सव्येन कर्त्रिं वामेन रोहितं बिभ्रती ।

चौरी रक्ता कृष्णपात्र[16]शूकर[17]भृत्सव्येतरकरा ।

वेताली[18] कनकवर्णा कूर्मपद्मभाजनभृत्सव्यवामभुजा ।

घस्मरी श्यामा सर्पयोगपात्र[19]धारिसव्येतरकरा ।

पुक्कसी नीला सिंहपरशुभृत्सव्यवामपाणिः ।

शबरी शुभ्रा भिक्षुखिं[20]खिरधारिसव्यवामकरा ।

चण्डाली नभःश्यामा चक्रलाङ्गलकलितदक्षिणवामपाणिपल्लवा ।

---

1 B omits °हेरुक° 2 B °ता° C °र्यन्ता° 3 B adds हिरण्यगर्भ before हरि° 4 B °ष्कि° 5 B °ष्ट्राङ्कुर° 6 B °रि° 7 B °तवः or °रगः 8 B वामेषु 9 Mss सार्धं 10 B °र्ति° 11 C °र्च्चि° 12 C °म्बी 13 C °रवि° 14 C त° 15 B °ष्कस्यो° 16 B °पीत° 17 B °श्रुक° 18 B °लारी 19 B °त्रि° 20 B °ष्कि°

डोम्बी कर्बुरवर्णा वज्रतर्जनीभृत्सव्येतरकरा ।

अष्टावर्धपर्यङ्कनृ[33a]त्यवत्योऽपरविशेषणैर्युक्ता नैरात्मेव ।

हेरुकनैरात्मयोरक्षोभ्यः कुलेशः । गौर्यादीनामक्षोभ्यवैरोचनरत्नेशामिताभाः, पुक्क[1]स्यादीनाञ्च[2] ।

अथवा द्विभुजश्चक्रेशः, ऊर्ध्वीकृतसव्यभुजेन वज्रं वामेन वज्रकपालं दधानः, नैरात्मालिङ्गितः खट्वाङ्ग[3]वामसक्तः ।

अथवा चतुर्भुजश्चक्रेशो नीलः सव्यकरेण वज्रं वामेन रक्तपूर्णकपालं[4] शेष[5]भुजाभ्यां स्वाभ[6]वज्रवाराहीमालिङ्गितः ।

अथवा चक्रेशः षड्भुजो नीलसितरक्तमूलसव्येतरात्रिवक्त्रः सव्यभुजाभ्यां वज्रकर्त्रित्रिशूलघण्टा[7] द[33b]धानः शेषाभ्यां वज्रशृङ्खलामालिङ्गितः । वज्रशृङ्खला तु वर्णभुजादिभिर्नैरात्मासदृशीत्यनङ्गवज्रपादाः ।

एते द्विभुजादयो विश्वाब्जस्य पुष्करे शव[8]हृत्सूर्ये अर्धपर्यङ्केण नृत्यन्तोऽक्षोभ्यमुद्रिता विश्ववज्राङ्कज्वलदूर्ध्वकेशाः पञ्चमुण्ड[9]मण्डिताः सभ्रूभङ्गभ्रुकुटीदंष्ट्राकरालिनः षोडशभुजवचक्रया[10]दिभिर्भूषिता गौर्यादिदेवीभिः परिवृताः । देव्यः सर्वा भस्मरहिताः । वज्रवाराही वज्रशृङ्खलाऽक्षोभ्यमुद्रिता[11] ।

हेवज्रचतुष्टयस्य हृद्बीजं हूँ । हूँ हूँ हूँ फट् स्वाहेति हृदयम्[12] । ओँ देव पिचुवज्र हूँ हूँ हूँ फट् स्वाहेति हृदयं षोडश[34a]भुजस्य । ओँ त्रैलोक्याक्षेप हूँ हूँ हूँ फट् स्वाहेति द्विभुजस्य । ओँ ज्वलज्ज्वले[13]भ्यो हूँ हूँ हूँ [फट्] स्वाहेति चतुर्भुजस्य । ओँ किटि किटि वज्र हूँ हूँ हूँ फट् स्वाहेति षड्भुजस्य । ओँ आः वज्रघस्मरि ओँ हूँ स्वाहेति घस्मरिमन्त्रः सा[14]र्वकर्मिकः ।

॥ इति नवात्मकहेरुकचतुष्टयमण्डलम् ॥

---

1 B °ष्क° 2 B °नां पंच 3 B °ड्गांस्तु 4 B °लस्य 5 B षड्° 6 B °भा° 7 C °ण्टे 8 B सर्व° 9 B °मुद्रा° 10 B °क्रा° 11 B °तः 12 This sentence is omitted in B 13 B °ज्वल° 14 C स°

## [ अथ महामायामण्डलम् । ]

महामायामण्डले वज्रपञ्जरोदरस्थितधर्मोदयागर्भकूटागारनाभौ[1], वज्रपञ्जरस्य मध्ये कूटागारमिति कश्चित्। कूटागारस्य मध्ये रक्ताष्टदलकमलस्य कर्णिकायां सूर्ये महामाया-ह्व[2]हेरुकः कृष्णोऽर्क[3]प्रभो ज्वालामा[4]लाललित[34b]क्रोधः कपिलोर्ध्वज्वलत्केशकपालमुकुटो नीलपीतश्वेतहरितमूलसव्य[5]पश्चिमवामचतुर्मुखः। प्रतिमुखं रक्तवर्त्तुलत्रिनेत्रश्चतुर्भुजः सव्य-भुजाभ्यां कपालशरौ वामाभ्यां खट्वाङ्गधनुषी दधानः षण्मुद्रो नरचर्माम्बरधरोऽर्धपर्यङ्केन ताण्डवी।

प्रियतुल्यायुधा रक्ताभा [6]तत्कण्ठाश्लेपिदोर्द्वया श्रीबुद्धडाकिनी रक्तपीतश्वेतहरितमुखी।

पूर्वदले वज्रडाकिनी नीला नीलपीतसितहरितमुखी[7] व[8]ज्रकपालघण्टाखट्वाङ्गधारिणी।

दक्षिणे रत्नडाकिनी पीता पीतनीलसितहरितमुखी[35a] रत्नच्छटात्रिशूलग्रीवार्पित-जम्बुकपताका[9]धारिणी।

पश्चिमे पद्मडाकिनी सिता सितपीतनीलहरितवक्त्रा विश्वकमलशरकपालचापधरा।

उत्तरे विश्वडाकिनी हरिता हरितपीतसितनीलवदना खड्गडमरुपाशकपालभृत्करा[10]।

सर्वाः[11] पञ्चमुद्रिण्यः चन्द्रासनप्रभाः शेपमासां प्रभोरिव।

भगवतोऽक्षोभ्यः कुलेशः। बुद्धडाकिन्यादीनान्तु यथाक्रमं शाश्वताक्षोभ्यरत्नेशवागी-शामोघसिद्धयः।

भगवतो हृद्बीजं हूँ। ॐ हूँ हूँ हृदयम्। बु[35b]द्धडाकिन्यादीनान्तु ॐ ॐ हूँ ॐ स्वा हूँ, ॐ आः हूँ। ॐ हा हूँ इति विश्वडाकिन्या मन्त्रः सार्वकर्मिकः।

॥ इति महामायामण्डलम् ॥

---

1 B adds after this धर्मोदयागर्भकूटागारं नाम धर्मोदया। 2 B °योग° 3 B °ष्णरक्त° 4 B क° 5 C °ध्ये 6 B omits तत्° 7 B °वदना 8 C omits वज्र...मुखी 9 B प्रभांक° 10 B ला, C गाः 11 व्यः

## [ अथ बुद्धकपालमण्डलम् । ]

भगवतो बुद्धकपालस्य नवात्मकस्य मण्डले वज्रपञ्जरान्तर्धर्मोदयामध्यस्थकूटागारस्य मध्ये विश्वाम्बुजस्य पुष्करे शव[1]हृत्सूर्ये निष्प्रज्ञो भगवान् वज्रादिभिर्वक्ष्यमाणत्रिचक्रस्थश्रीबुद्धकपाल इव प्रागुदक्प्रत्यगवाक्कमलदलेषु यथाक्रमं चित्रसे[2]नाकामिनीपातालवासिनीसौभद्राः नीलवर्णाः प्रत्यालीढाङ्घ्रिद्वया व्याघ्राजिननिवसनाः सव्यक[ 36a ]राभ्यां कर्त्रिकपाले वामाभ्यां खट्वाङ्गडमरू बिभ्राणाः ।

ऐशानाग्नेयनैर्ऋत्यवायव्यदलेषु शौण्डि[3]नीचतुर्भुजाऽऽकाशवासिनी[4]पीताम्ब[5]राः स्फुरद्र्पी[6]तरङ्गमय आलीढचरणद्वया अष्टफणीन्द्रभूषणा दक्षिणपाणिभ्यां कर्त्रिडमरू वामाभ्यां खट्वाङ्गपद्मभाजने[7] दधानाः ।

अष्टावप्यमू मार्त्तण्डमण्डलेषु ताण्डविन्यो ज्वलत्पिङ्गलोर्ध्वमूर्धजा मूर्ध्नि पञ्चकपालमालिन्यः पञ्चमुद्रादिमण्डिता गलावलम्बिसार्द्र[8]पञ्चाशन्नरशिरःश्रेणयः[9], ईषद्दंष्ट्राकरालत्रिनेत्रैकवक्त्राश्चतुर्भुजाः[ 36b ] ।

भगवतोऽक्षोभ्यादिपञ्चबुद्धैर्मुद्रणम्। चित्रसेनादीनामक्षोभ्यवैरोचनरत्नसम्भवामिताभाः। शौण्डि[10]न्यादीनामप्येते[11] ।

अथवाऽयं भगवान् दिग्दे[12]व्यश्च शुक्लाः । विदिग्दे[13]व्यो रक्ताः । निष्प्रज्ञोऽयं सप्रज्ञो वा ।

॥ इति बुद्धकपालमण्डलम् ॥

---

1 B सर्व° 2 B °स्ये 3 B सौदि° 4 mss न्वः 5 B ता° 6 B स्करपी° 7 B omits पद्मभाजने 8 C °र्द्ध° 9 C °यो 10 B °दि° 11 B °तैः 12 B °ग्द्र° 13 B °ग्द्र°

## [ अथ वज्रहूँकारमण्डलम् । ]

वज्रहूँकारमण्डले वज्रपञ्जरान्तर्धर्मोदया[1]कूटागारस्य मध्ये विश्वाब्जसूर्योपरि भैरवकालरात्र्यावा[2]लीढचरणाभ्यामाक्रान्तत्रैलोक्यविजयो भगवान् क्रुद्धानन:[3] प्रलयानलवज्ज्वलन् कवलयन्निव जगद्विघ्नवृन्दानि नीलो नीलपीतहरितमूलसव्येतरव्याड[4]विकृत[37a]वक्त्रत्रयो दंष्ट्रोत्कटललज्जिह्वोऽतिभीषण: प्रतिमुखं सभ्रूभङ्गभ्रुकुटी[5]रक्तवर्त्तुलत्रिनेत्रो ललाटोपरि पञ्चकपालावलि[6]र्गलावलम्बिग[7]लदस्रपञ्चाशच्छिर:श्रेणीक: षण्मुद्रो नीलानन्तवलयितोर्ध्वकपिलकुन्तलो रक्ततक्षककृतकर्णावतंसो मृणालधवलमहापद्मकृतहारो दूर्वाश्यामकर्कोटककृतयज्ञोपवीत: शुक्लवासुकिकृत[8]मेखल: कृष्णसुन्दरपद्मकृतनूपुर: पीतशङ्खपालकृतकङ्कणो धूमाभकर्बुरकुलिककृतकेयूरो वज्रसत्त्वमुद्रितो वज्रवज्रघण्टाभृद्भुजाभ्यां त्रैलोक्यविजयमुद्रया स्वाभप्रज्ञासमापन्नो दक्षिणपाणिभ्यामङ्कुशपाशौ वामाभ्यां कपालखट्वाङ्गे बिभ्राणो भाव्य: ।

अ[37b]स्य पूर्वस्यां दिशि वज्र[9]दण्डो नीलो नीलपीतहरितमूलसव्येतरवक्त्र: सव्यभुजाभ्यां वज्रमुद्गरमुद्रान्वि[10]तसतर्जनीवज्रं वामाभ्यां कपालखट्वाङ्गे दधान: । १ ।

उत्तरस्यामन[11]लार्क: पीत: पीतनीलहरितमुखो वज्रदण्डधर: प्रधानपाणिना वज्रादिचिह्नानि वज्रदण्डस्य वाऽस्य वक्ष्यमाणानां च । २ ।

पश्चिमायां वज्रोष्णीषो रक्तो रक्तसितहरितवक्त्रो रक्तपद्म[12]पाणि: । ३ ।

दक्षिणस्यां वज्रकुण्डली हरितो हरितपीतसितवदनो विश्ववज्राञ्चितकर: । ४ ।

आग्नेय्यां वज्रयक्षो धूम्रवर्णो धूम्रपीतहरितमुखोऽङ्कुश[13]धारी । ५ ।

नैर्ऋ[38a]त्यां वज्रकालो रक्तो रक्तपीतहरितवक्त्र: परशु[14]पाणि: । ६ ।

वायव्यां महाकालो[15] नीलो नीलपीतहरितमुखस्त्रिशूलपाणि: । ७ ।

ऐशान्यां वज्रभीषण: कृष्ण: केकरकृष्णपीतहरितवक्त्र: खड्गपाणि: । ८ ।

एते वज्रादयोऽष्टौ[16] यथाक्रमं यमान्तकप्रज्ञान्तकपद्मान्तकामृतकुण्डलीटक्किराजनीलदण्डमहाबलाचलापरनामान: ।

ऊर्ध्वमुष्णीषचक्रवर्त्ती सित: सितनीलहरितमुखश्चक्रपाणि: ।

---

1 B °यायां 2 B °लेनाभ्या° 3 C क्रोधेन 4 C °ल° 5 C °टिन: 6 C °ली 7 B म° 8 B omits °मेखल:......कुलिककृत° 9 B वज्रनील° 10 B °द्दीमि° 11 B °ल° 12 पद्म is omitted in B 13 B अंश° 14 C °शुं° 15 B रो 16 B °टा

अधो वज्रपातालः सुम्भापरनामा नीलो नीलपीतहरितास्यो वज्रमूषललिलतकरः, वामे त्व[ 38b ]स्य नागपाशतर्जनीखट्वाङ्गान् ।

एते वज्रदण्डादयः क्रोधाः प्रधानचिन्हकपालाञ्चि[1]तकराभ्यामालिङ्गितस्वाभप्रज्ञा ज्वलदूर्ध्वकपिलकुन्तलाः स्वकुलनाथोद्भासिमुकुटाः सभ्र[2]भङ्गभ्रुकुटीकरालवदनाः प्रतिवक्त्रं रक्तवर्त्तुलत्रिनेत्रा नृमुण्डमालापञ्चमुद्राद्यष्टभुजगराजभूषणा[3] विश्वाब्जसूर्येष्वष्टौ[4] दिक्पालानूर्ध्वतो ब्रह्माणमधश्च वेमचित्रिणमाक्रम्यालीढचरणाभ्यां स्थिताः स्वकुलेशमुद्रिता यथा मञ्जुवज्रस्य दशारचक्रे ।

भगवतो वज्रहूँकारस्य हृद्बीजं हूँ । ओँ खवज्र[ 39a ]धृक् वज्रहूँ इति हृदयम् । ओँ वज्र-कुण्डलि वज्रहूँ फट् इति वज्रकुण्डलीमन्त्रः [5]सार्वकर्मिकः ।

अथवा पूर्वादिदिग्विदिगू[6]र्ध्वाधोविश्वाम्भोजभानुषु दक्षिणावर्त्तेन[7] यमान्तकादयो दश क्रोधाः । एषां स्थानवर्णादिकञ्च यथोक्तं पिण्डीक्रमोक्तमण्डले यथा वा मञ्जुवज्रमण्डल[8]स्य दशारचक्रे यथा वा श्रीसम्पुटवज्रसत्त्व[9]मण्डले ।

एषु त्रिष्वपि पक्षेषु ओँ आः विघ्नान्तकृत् हूँ इति विघ्नारेर्मन्त्रः सा[10]र्वकर्मिकः ।

[ **इति वज्रहूँकारमण्डलम् ।** ]

---

1 C °ङ्कि° B °ञ्चि° 2 B शत्रु° 3 B खना 4 B °र्यषष्ठे 5 B °लेयः 6 C °ग्मू° 7 B °र्त्ते 8 B °ले 9 B omits वज्रसत्त्व 10 B स°

## [ अथ सम्बरमण्डलम् । ]

सम्बरमण्डले वज्रपञ्जरस्याभ्यन्तरे सुमेरूपरि विश्वा[ 39b ]ब्जपुष्करस्थविश्ववज्रवेदिस्थितकूटागारस्य मध्ये भगवान् विश्वाम्भोजस्य कर्णिकोपरि भानुस्थभैरवकालरात्र्यावालीढचरणाभ्यामाक्रान्तः कृष्णः कृष्णहरितरक्तपीतपूर्वोत्तरादि[1]चतुर्मुखः प्रतिवक्त्रं त्रिनेत्रो व्याघ्रचर्माम्बरो द्वादशभुजः सवज्रवज्रघण्टाभुजयुग्मालिङ्गितवज्रवाराहीको भुजाभ्यां पृष्ठतः शुभ्रसरक्तप्रसृतगजचर्मधरस्तदपरैर्डमरुपरशु[2]कर्त्रित्रिशूलानि बिभ्रद्वामैर्वज्राङ्कितखट्वाङ्गरक्तपूरितकपालं वज्रपाशं ब्रह्म[3]शिरश्च[4] गलाव[ 40a ]लम्बिपञ्चाशत्सार्द्रनरशिरःश्रे[5]णीकः षण्मुद्रो नाग[6]यज्ञोपवीती ललाटोर्ध्वपञ्चकपालमाली[7] वामावर्त्तितार्धचन्द्रविश्ववज्राक्रान्तकृष्णजटामुकुटो विकृतध्यानो[8]त्कटदंष्ट्रवक्त्रो नवनाट्यरसराशिः ।

वज्रवाराही तु रक्ता त्रिनेत्रैकवक्त्रा मुक्त[9]कुन्तल[10]कलापा नग्ना कपालखण्डकृतकटि[11]भूषणा आलिङ्गनकरधृतकपालगलितरजोधारया प्रभुं पाययन्ती प्रसृतोर्ध्वभुजतर्जनैकवज्रेण दुष्टान् सन्तर्जयन्ती नीरक्तत्वेन शुष्कनरशिरोमालिनी सूर्यप्रभामण्डलि[ 40b ]नी पञ्चमुद्रिणीषड्[12]सन्ती रजःस्वला रोमाञ्चकञ्चुकिता ।

ततः प्राच्यादिदिक्षु वामावर्त्तेन चक्र्यादिविदिक्षु दक्षिणावर्त्तेन न्यासः ।

तत्र दिग्दलेषु डाकिनीला[13]माखण्डरोहारूपिण्यः कृष्णश्यामरक्तगौरवर्णाः त्रिनेत्रैकवक्त्रा मुक्तकुन्तलाश्चतुर्भुजा वामाभ्यां खट्वाङ्गकपाले[14] सव्याभ्यां डमरुकार्त्रिके बिभ्रत्यालीढस्थाः।

विदिग्दलेषु बोधिचित्तेन रजसा[15] पञ्चामृतैः पञ्चप्रदीपैश्च सिद्धिरसवदमृतीभूतैः पूर्णान्य[16]ब्जभाजनानि, चत्वार्य[17]पि पञ्चामृतपूर्णा[ 41a ]नि वा ।

ततः चित्तचक्रस्य पूर्वस्मिन्नारे खण्डकपालप्रचण्डे । १ ।

उत्तरे महाकङ्कालप्रचण्डाक्ष्यौ । २ ।

पश्चिमे कङ्कालप्रभावत्यौ । ३ ।

दक्षिणे विकटदंष्ट्रिमहानासे[18] । ४ ।

आग्नेये सुरावैरि[19]वीरमत्यौ । ५ ।

नैर्ऋत्ये[20]ऽमिताभखर्व[21]र्यौ । ६ ।

---

1 B पूर्वा तदित° 2 C °शु° 3 B °ष्ट° 4 B °लं च 5 C °सत्रे° 6 B नहरु° 7 B °लिम: मणि° C °पाली 8 B °तो° 9 B °मुकुट° 10 B °ला 11 B °र्त्ति° 12 Mss °ड्व° 13 B ना° 14 B °ल° 15 B °सां 16 B °ना° 17 B °र्यर्ये° 18 C °शौ 19 B °री° 20 C °ते 21 B खेच°

वायव्ये वज्रप्रभलङ्केश्वर्यौ । ७ ।

ऐशाने वज्रदेहद्रुमच्छाये । ८ ।

एवं क्रमेण वाक्चक्रस्य । अङ्कुर[1]कैरावत्यौ । १ ।

वज्रजटिलमहाभैरवे । २ ।

महावीरवायुवेगे । ३ ।

वज्रहूँकारसुराभक्ष्यौ । ४ ।

सुभद्रश्यामादेव्यौ । ५ ।

वज्रप्रभसुभद्रे । ६ ।

महाभैरवहयकर्ण्यौ । ७ ।

विरूपाक्षखगानने[41b] । ८ ।

तथा कायचक्रस्य । महाबलचक्रवेगे । १ ।

रत्नवज्रखण्डरोहे[2] । २ ।

हयग्रीवशौण्डिन्यौ । ३ ।

आकाशगर्भचक्रवर्मिण्यौ । ४ ।

श्रीहेरुकसुवीरे[3] । ५ ।

पद्मनर्त्तेश्वरमहाबले । ६ ।

वैरोचनचक्रवर्त्तिन्यौ । ७ ।

वज्रसत्त्वमहावीर्ये । ८ ।

खण्डकपालादयो वीरास्त्रिनेत्रैकवक्त्रा जटामुकुटिनो ललाटनिविष्टवज्रमालाङ्कित-वीरपट्टाश्चतुर्भुजाः, आलिङ्गनभुजाभ्यां वज्रवज्रघण्टे[4] वामेन खट्वाङ्गं सव्येन डमरुं बिभ्राणा ब्रह्मसूत्रकेयूरयुक्ता दंष्ट्राकरालवदनाः पञ्चमुद्रिण आ[5]लीढस्थाः ।

प्रचण्डादिदेव्यस्त्रिनयनै[42a]कवदना रौद्ररूपिण्यो मुक्तकेश्यो[6] नग्ना द्विभुजा आलि[7]ङ्गितकरेण कपालं सव्येन दुष्टतर्जनकर्त्रिकां बिभ्रत्यः ।

द्वारेषु काकास्यो[8]लूकास्याश्वानास्याशूकरा[9]स्याः डाकिन्यादिवत् परमेशा[10]नुगताः[11] ।

कोणेषु यमदाही[12]यमदूतीयमदंष्ट्रीयममथन्यो मानुषीमुखाः ।

---

1 B °रि° 2 B °हा 3 B °रौ 4 B °ण्टा 5 B °णा° 6 C श्यौ, B शौ 7 B °जालि° 8 B °स्या उ° 9 शुका 10 B °मान्तामा° C मशामा° 11 B adds गतानि 12 °टी or दी

सव्येतरदिग्देव्यः सव्येतरकायार्धसदृशशरीरा दिग्व[1]सनास्त्वष्टावपीमाः ।

सर्वाश्च डाकिन्यादिदेवता गलावलम्बिमुण्डमालावज्रमालाङ्कललाटाः पञ्चमुद्रिण्यो मेखला[2]सरचघुर्घुरादि[42b]भिर्भू[3]षिताः ।

कुलेशस्तु भगवतोऽक्षोभ्यो वज्रवाराह्या वैरोचनो डाकिन्यादीनां रत्नेशः । चित्तवाक्कायगतानामक्षोभ्यामिताभशाश्वताः समयचक्रस्थानाममोघसिद्धिः ।

भगवतो हृद्बीजं हूँ । ओँ श्री वज्र हे हे[4] रु रु[5] क हूँ हूँ फट् डाकिनीजालसम्बर स्वाहेति हृदयम् । ओँ खण्डरो हूँ हूँ हे फट् इति खण्डरोहाया मन्त्रः सा[6]र्वकार्मिकः । अपरदेवतामन्त्रा अस्माभिः श्रीसम्बराभिसमयोपयिका[7]यामुक्ताः ।

अथवा चक्रेशादयो यममथनीपर्यन्ताः सर्वा द्वि[8]भुजैकवदनाः । तत्र सव्येतरालिङ्गनभुजाभ्यां[43a]पञ्चविंशतिवीरा वज्रवज्रघण्टाभृतो डाकिन्यादिचतस्रः काकास्यादयश्च वामेन कपालं वामा[9]सक्तखट्वाङ्गञ्च सव्येन कर्त्रिडमरू दधानाः । अपरं सर्वं पूर्ववत् ।

अथवाऽत्र[10]चक्रेशादिद्विभुजत्वपक्षे श्रीसम्बरवज्रवाराह्यौ सुवर्णवर्णे नीले वा । भगवानुद्यतसव्येन वज्रोल्लालनपरो वामेन कपालखट्वाङ्गधरः । सवज्रवज्रघण्टाभ्यां द्वाभ्यामपि आलिङ्गनपरो वा ।

डाकिन्यादिचतस्रः पीताः सव्येन डमरुभृत् ।

चित्तचक्रस्य वीराः कृष्णा वज्रवज्रघण्टाभृ[43b]तो वीरिण्यः सिताः सवज्रतर्जनीकसव्यकराः ।

वाक्चक्रस्य वीरा रक्ताः पद्मपद्मघण्टाभृतो डाकिन्यः कृष्णाः सपद्मतर्जनीकस[11]व्याः ।

कायचक्रस्य वीराः शुभ्राश्चक्रचक्रघण्टाधराः देव्यो रक्ताः सव्येन[12]सतर्जनीकचक्रभृतः ।

सर्वे[13] वीरा आलिङ्गनपराः । आलीढस्थास्त[14]ज्जङ्घावेष्टनपरा वीरिण्यः ।

काकास्यादयः सव्येन सतर्जनीककर्त्रिधराः ।

सर्वा देव्यो वामहस्तेन कपालधारिण्यः ।

यमदाह्या[15]दयः सव्येन डमरुं वामेन सतर्जनीकमु[16]ण्डं बिभ्राणाः ।

डाकिन्यादीनां काकास्यादीनां च वा[44a]मबाहौ खट्वाङ्गम् । ताश्च द्वादशार्धपर्यङ्केण नृत्यवत्यः ।

---

1 C °ग्वा° 2 B °लादि° 3 B °दिभू° 4 C omits 5 C omits 6 B स° 7 mss °पैका° 8 Mot in B 9 C बाव्हा° 10 B त्रयं 11 C °नीस° 12 B omits सव्येन 13 B °व्ये 14 B °त° 15 C °ह्या° 16 B °कु°

अपरं सर्वं पूर्ववदिति त्रीणि सम्बरमण्डलानि ।

यदा त्वेषु पञ्चविंशतिवीरा अनु[1]भाव्यन्ते वज्रवाराही चक्रेशा भवति तदा त्रीणि वज्रवाराहीमण्डलानि ।

वज्रवाराह्या हृद्बीजं वँ । ओँ वज्रवैरोचनीये हूँ हूँ फट् इति हृदयम् ।

आसां द्विभुजसम्बरादिदेवतानां सव्यहस्त[2]स्थानि[3] चिन्हानि लेख्य[4]मण्डले लिखितव्यानि ।

[ इति सम्बरमण्डलम् । ]

---

1 B °रानु° 2 B °स्ते 3 B °न° 4 B रेखा°

# [ अथ बुद्धकपालमण्डलम् । ]

भगवतो बुद्धकपालस्य पञ्चविंशत्यात्मकस्य मण्डले वज्रपञ्जरान्तर्धर्मोदयागर्भस्थकूटागारस्य मध्ये कृष्णाष्टारचक्रस्थविश्वा[44b]ष्टदलकमलस्य कर्णिकायामुत्तानश[1]वहृदि मार्त्तण्डमण्डले भगवान् हेरुकः कृष्णः अर्धपर्यङ्केण नवनाट्यरसैर्नृत्यन् रक्तवर्त्तुलत्रिनेत्रैकवक्त्रश्चतुर्भुजः सव्याभ्यां डमरुकर्त्री वामाभ्यां कपालखट्वाङ्गे बिभ्राणः षण्मुद्रो गलावलम्बिसार्द्रपञ्चाशन्नरशिरःश्रेणिः पश्चाद्भागे ग[2]लद्वीपिचर्माम्बरो विश्वकुलिशार्धशशाङ्काङ्कितकृष्णजटाविटपितपञ्चकपालकलितललाटकोटिः पञ्चबुद्धमुकुटी ।

अस्य प्रभोः प्रेयसी चित्रसेना निर्व[3]सना नृ[4]मुण्डमालाज्वलदूर्ध्वमुक्तकपिलकुन्तला पञ्चकपालाङ्क[5]शिरस्केष[45a]त्करालदशनत्रिनेत्रैकवक्त्रा रक्ताभतत्क[6]न्धरासक्तवामकरकपालाद्र[7]लितरजोधारा प्रभुं पाय[8]यन्ती हननाभिनयेन सकर्त्रिसव्यभुजा ।

प्राच्यारे[9] कृष्णारोपरिदले सु[10]मालिनी उदीच्यारे[11] कपालि[12]नी पश्चिमे भीमा दक्षिणे दुर्जया[13] ।

ईशानादिदलेषु दक्षिणावर्त्तेन शुक्ररजःपञ्चामृतप्रदीपपूर्णानि कपालानि ।

इदमाद्यपुटं नीलकुलिशावलीवलयितम् ।

ततो द्वितीयपुटं रक्ताष्टारस्थाष्टपद्मे रक्तवज्रावलीवेष्टितम् ।

तस्य पूर्वस्मिन्नारे शुभमेखला उत्तरे रूपिणी पश्चिमे विजया दक्षिणे कामि[45b1]नी[14] ईशाने कपालिनी[15] आग्नेये महोदधिर्नैर्ऋत्ये कारिणी वायव्ये सुमालिनी[16] ।

ततस्तृतीयशुक्राष्टारस्याष्टपद्मे शुक्लवज्रावलीवल[17]यितम् ।

तस्य[18] पूर्वा[19]रे तारिणी उत्तरे भीमदर्शना पश्चिमे सुदर्शना दक्षिणे अजया ईशाने शुभा आग्नेये ता[20]डका नैर्ऋत्ये कालरात्री वायव्ये महाहा[21]सा ।

पूर्वद्वारे पद्मे सुन्दरी उत्तरस्मिन्नब्जे वज्रसुन्दरी पश्चिमे पद्मे सु[22]भगा दक्षिणाब्जे प्रियदर्शना ।

---

1 B सर्व° 2 B स्ख° 3 B °व° 4 B omits 5 B °कर° 6 C °भूक° 7 C °लग° 8 B पोष° 9 B °र्चाने 10 B °षु 11 B °चीने 12 B °परि° 13 B °णोदया. The B Ms is very corrupt here. 14 B °रीगी 15 B कापारिगी 16 B °च्चमारिणी 17 B °चरीचर° 18 B °त्र 19 B °र्वद्वा° 20 C स्ता° 21 B °होज° 22 B पद्मसुन्दरी

सर्वा इमाः सव्येतरकराभ्यां कर्त्रिकपाले बिभ्राणा मना[46a][1]ग्दन्तुरदन्तास्त्रिनेत्रैक-वक्त्रा नीरंशु[2]भूषणा मुण्डमालारहिताः पिङ्गलो[3]र्ध्वज्वलन्मुक्तकचसञ्चयाः शवस्थहृ[4]त्सूर्ये-ष्व[5]र्धपर्यङ्केन ताण्डविन्यः ।

द्वारपाल्य[6]स्तु प्रत्यालीढपदाः सर्वा[7] व्याघ्रचर्माम्बरा नीलवर्णाः । अथवा सुमालि[8]-न्यादयश्चतस्रः कृष्णाः ।

द्वितीयपुटिन्यो गौरास्तृतीयपुटवर्त्तिन्यः श्यामा द्वारदेव्यः कृष्णाः ।

भगवानक्षोभ्यादिपञ्चतथागतैर्मुद्रितः ।

चित्रसेना महावैरोचनेन ।

सुमालिन्यादयश्चतस्रो रत्नेशेन ।

द्वितीयपुटस्था[9] अमिताभेन[10] ।

तृतीयपुटस्था[11] वैरोचनेन[12] ।

द्वारदेव्योऽमोघसिद्धिना[46b] ।

भगवतो हृद्बीजं हूँ[13] । ओँ बुद्धकपालिनि आः ही है हूँ फट् हृदयम्[14] । अनेनैव मन्त्रेणात्र सर्वकर्म[15] कर्त्तव्यम् ।

[ इति बुद्धकपालमण्डलम् । ]

---

1 B °गु° 2 B °ल सु° 3 C °गो° 4 B स्रवच्छुहा 5 B °स्तर्ध° 6 B °ल° 7 B °देन 8 B °रि° 9 B दितिपूर्वस्य 10 B omits 11 B omits 12 B °नो 13 B ही है हूँ 14 B omits 15 B सार्वकर्मिकम् ।

## [ अथ योगाम्बरमण्डलम् । ]

योगा[1]म्बरमण्डले वज्रपञ्जरस्याभ्यन्तरेऽनिलानलजलौघमण्डलोपरि महासमुद्रादिपरि-कलि[2]तसुमेरुमूर्ध्नि विश्वाब्जवज्रवेदिस्थितकूटागारगर्भे गर्भपुटस्य नाभौ सिंहोपरि विश्वाम्भोज-चन्द्रेऽर्ध[3]पर्यङ्कनिषण्णो भगवान् योगा[4]म्बरः कृष्णः कृष्णसितरक्तमूलसव्यवाममुखत्रयः प्रतिमुखं त्रिनेत्रः षण्मुद्रो ललाटतट[5]स्थपञ्चकपालमाली[6] मण्यर्धचन्द्रविश्ववज्राक्रान्त[7]कृष्णजटाजूट-[ 47a ]स्फुरत्पञ्चतथागतमुकुटी पश्चात्स्खल[8]व्याघ्रचर्माम्बरः षड्भुजो वज्र[9]वज्रघण्टाभृद्भुजाभ्यां कृष्णां शुक्लां वा ज्ञानडाकिनीं पीतभुजङ्गभूषणा[10]मालिङ्गितः सव्याभ्यां स्तनबाणौ वामाभ्या-मब्ज[11]भाजनधनुषी दधानः ।

ततः[12] पूर्वकोष्ठे गजराजे ललिताक्षेपस्था वज्रडाकिनी सिता ।

उत्तरे मयूरेऽर्धपर्यङ्कनिषण्णा घोरडाकिनी पीता भुजङ्गभूषणा ।

पश्चिमे गरुडे उत्कूट[13]कासना वेताली रक्ता ।

दक्षिणे किङ्करासने[14] जानुपर्यङ्का[15] चण्डालिनी[16] विकीर्णरक्तकेशा शिरसि न्यस्ताञ्जलिः ।

इह[17] डाकि[ 47b ]न्यादयः पञ्चकपालखट्वाङ्गभृत्सव्येतरकरद्वितयाः । वज्रडाकिन्यादयो गजादिस्थितपद्मसूर्यस्था गजचर्मनिवसना नरचर्मप्रावरणाः ।

ईशाने सिंहे ललिताक्षेपनिषण्णा सिंहिनी सितपीता द्विभुजा सव्येनोर्ध्वखड्गं वामेन सतर्जनीकपाशं बिभ्रती ।

आग्नेये गज[18]तुण्डे मण्डलाक्षेपेण निषण्णा व्याघ्री सितकृष्णा द्विभुजा सव्येतरयो-रङ्कुशपाशौ ।

नैर्ऋत्ये महिषेऽर्धपर्यङ्कस्था जम्बुकी जम्बुकमुखी रक्तकृष्णा परशुपाशभृद्भु[19]जद्वया ।

वायव्ये शृगाले[20] उत्कूट[21]कासना उलूकी उलूकमुखी रक्तपीता दण्डपाशधर-[ 48a ] करद्वया ।

एताः स्ववाहनेषु पद्मसूर्यस्थाः ।

---

1 B °ग° 2 B °रि° 3 C सत्त्व° 4 B °ग° 5 B omits °तट° 6 B °पाली° 7 B °ज्रान्त° 8 C स्फुर° 9 B omits वज्र 10 B omit पीता भुजङ्गभूषणा° 11 B °सवज्र° 12 B omits 13 B °टु° 14 °ना 15 B °ङ्कस्था° 16 B adds °ल° and adds °डाकिनी पीता भुजङ्गभूषणा नीला । 17 B °ज्ञानडा° 18 C वज्र° 19 C °पाशभु° 20 B शृंगार° 21 B °टु°

पूर्वस्मिन् वज्रडाकिन्याः पृष्ठतो डाकिनी[1] सिता मुखाक्षिप्तहस्तद्वया।

उत्तरे घोरडाकिन्याः पृष्ठतो दीपि[2]नी पीता मूर्ध्नि दीपवत्कृताञ्जलिः।

पश्चिमे वेतालयाः पृष्ठतश्चूपि[3]णी रक्ता रुधिराञ्जलिर्वक्त्रेऽर्पयन्ती[4]।

दक्षिणे चण्डाल्याः पृष्ठतः कम्बोजी कृष्णा कराभ्यां हृद्युपस्थापितमुसला।

एताश्चतस्रः पद्मसूर्ये शव[5]स्थाः।

ततो वज्रावलीरोमार्चिर्वलयाद्बहिर्वर्त्तुलपुटे पद्मचन्द्रेषु—

पूर्वस्यां दिशि पुक्कसी[6] नन्दीचण्ड[7]पीयूषभाजनभृद्भुजयुग्मा।

उत्तरस्यां घोरी रुधिरमांसपञ्चप्रदीपपूर्णपद्मभाण्डभृत् [48b]।

पश्चिमायामुग्री ज्वलितबीभत्सबलिभाण्डव्यग्रकरा।

दक्षिणस्यां कपाली वज्रकुन्तपानभाण्डभृद्भुजद्वया।

ऐशान्यां लास्या गर्वहस्ता गन्धा च गन्धभाजनं बिभ्रती।

आग्नेय्यां वीणा[8] वीणां वादयन्ती पुष्पा च पुष्पमुत्क्षिपन्ती[9]।

नैर्ऋत्यां गीता मुखाग्रे तर्जनीं चालयन्ती धू[10]पा च धू[11]पकटच्छुकरा।

वायव्यां नृत्या[12]नृत्यदर्घ्याञ्जलिः दीपा[13] च सदीपपाणिपल्लवा।

एता ज्ञानडाकिन्यादयस्त्रयस्त्रिंशद्देव्यो द्विभुजाः त्रिनेत्रैकवक्त्रा मुक्तकेश्यः[14] शिरसि पञ्चकपालमालिन्यो घोरडाकिनी तूर्ध्वकेशी।

सिंहिन्यादयो रक्तवस्त्राः।

पुक्क[15] [49a] स्यादयः शुक्लाः, अग्निकोण[16]देव्यश्च[17]।

अघोर्यादयः पीताः, ईशानदेव्यश्च।

उग्र्यादयो रक्ताः, वायव्यदेव्यश्च।

कपाल्यादयः कृष्णाः, नैर्ऋत्यदेव्यश्च।

ततो वज्रावलीवलयाद्बाह्यपुटद्वारेषु पट्टिकासु च सरोजचन्द्रासनानि।

तत्र[18] पूर्वद्वारे हरिः[19] कृष्णः।

---

1 B omits न्याः...डाकिनी 2 B °प° 3 C °ष° 4 B पिबन्ती 5 B सर्व° 6 B °ष्कलो 7 C द्राविडीचण्डी 8 B omits 9 B क्षेपयन्ती 10 C सुधू° 11 C सुधू° 12 B omit 13 B °न्या 14 B °शाः 15 B °ज्य° 16 C णे 17 C °व्योच 18 B °तो 19 B °रिनः.

उत्तरे ब्रह्मा पीतः ।

पश्चिमे महेश्वरः श्वेतः ।

दक्षिणे षड्वक्त्रो रक्तः ।

ईशानकोणे इन्द्रः[1] पीतः ।

आग्नेये कुबेरः पीतः ।

नैर्ऋत्यां यमः कृष्णः ।

वायव्ये वरुणः सितः ।

देवतापट्टि[2]कायाः पूर्वस्यां करङ्कभैरवः[ 49b ] खट्वाङ्गराक्षसो गणेश्वरो घण्टाकर्णश्च शुक्लाः ।

उत्तरस्यां चण्डे[3]श्वरः छन्दोदेवः[4] ज्वरेश्वरो झंकार[5]भीषणश्च पीताः ।

पश्चिमायां टङ्किरुद्रः स्थण्डिलेश्वरो डमरुडम्बरो ढक्का[6]भयानकश्च रक्ताः ।

दक्षिणस्यां तुम्बुरेश्वरः स्फारनादो दंष्ट्राकरालो धनुर्धरश्च कृष्णाः ।

एते चतुर्विंशतिर्हरिप्रभृतयश्चतुर्भुजास्त्रिनेत्रैकवक्त्राः खट्वाङ्गत्रिशूलभृत्सव्यभुजालिङ्गित-देव्यः कपालपाणयः कृष्णजटामुकुटाः पञ्चकपालमालिनः पञ्चमुद्रिणो व्याघ्रचर्माम्बराः । देव्यस्त्वेषां[7] खट्वाङ्गक[ 50a ]पालभृद्दाक्षिणेतरकराः ।

इह श्रीयोगाम्बरोऽक्षोभ्यादिपञ्चतथागतमुद्रितः ।

ज्ञानडाकिनी त्वक्षोभ्येन वैरोचनेन वा मुद्रिता ।

वज्रडाकिन्यादयश्चतस्रः शाश्वतरत्नेशामिताभामोघसिद्धिभिः ।

सिंहिन्यादयश्चतस्रोऽक्षोभ्यवैरोचनरत्नेशामिताभैः ।

ब्रह्मा वैरोचनेन ।

महेश्वरोऽमिताभेन ।

अन्यास्तु[8] देवताः सिता वैरोचनेन ।

पीता रत्नेशेन ।

रक्ता अमितायुषा ।

कृष्णा अक्षोभ्येन ।

---

1 B °णेन्द्रः 2 B °ट्टु° 3 B °न्द्रे° 4 Mss °व्यः° 5 B शृङ्गारशृङ्गार° 6 C °टक्क° 7 B °श्वेत° 8 B °न्या.

मण्डलेशस्य हृद्बीजं हूँ। ओँ हूँ हः[1] स्वाहेति हृदयमन्त्रः। ओँ घूँ घः[2] स्वाहेति वेताल्याः सार्वकार्मिकमन्त्रः।

त्रिपुटम[50b]ण्डले गर्भमण्डलं कूटागाररूपम्। डाकिन्यादयश्चतस्रो द्वारस्थिताः। अन्यद्द्वितीयपुटमपि कूटागाररूपम्। मणिपुरं[3] वर्त्तुल[4]मिति कश्चित्।

॥ इति योगाम्बरमण्डलम् ॥

---

1 B हँ 2 B यूँ यः 3 C मित्यपर° 4 C चतुर°.

# [ अथ यमारिमण्डलम् । ]

यमारेर्म[1]ण्डले वज्रपञ्जरमध्ये धर्मोदयोदर[2]स्थकूटागारस्य मध्ये विश्वसरोजसूर्योपरिस्थितास्थ्यलङ्कृतक्रुद्ध[3]कृष्णमहिषपृष्ठस्थविश्वाब्जसूर्ये यमं[4] प्रत्यालीढपदाभ्यामाक्रम्य[5] स्थितः कृष्णो बभ्रुश्मश्रूर्ध्वमूर्धजो वज्राभरणभूषितः खर्वलम्बोदरः पीनो गलावलम्बित[6]मुण्डमालो ललज्जिह्वो ज्वलद्दं[7]ष्ट्राकरालः कृष्णसितरक्तमूलसव्यवामवदनः षड्भुजः कर्त्रिक[51a]पालाश्लि[8]तसव्येतरकराभ्यां स्वाभप्रज्ञासमा[9]लिङ्गितः सव्याभ्यां वज्रासी[10] वामाभ्यां चक्रा[11]ब्जे बिभ्राणो[12]ऽनन्तादिनागाभरणस्त्रैलोक्यविजय इव ।

अस्य पूर्वे वैरोचनः सितः कृष्णरक्तसव्येतरवक्त्रः सव्यभुजाभ्यां चक्रासी वामाभ्यां रत्नाम्भोजे बिभ्राणः ।

दक्षिणे रत्नेशः पीतः[13] पीतनीलशुक्लमुखत्रयः सव्याभ्यां रत्नासी वामाभ्यां चक्राम्बुजे दधानः ।

पश्चिमेऽमिताभो रक्तः रक्तकृष्णसितत्रिमुखः सव्याभ्यां पद्मासी वामाभ्यां मणिचक्रे बिभ्राणः ।

उत्तरे ईर्ष्यायमारिः श्यामः श्यामकृष्णसितत्रिवदनः सव्याभ्यां खड्गचक्रौ[14] वामाभ्यां मणिपद्मे बिभ्राणः ।

चत्वारोऽपि चक्रेशलक्षणैः क्रोधाः कर्त्रिकेराट[15]भृत्प्रधान[16]सव्येतरपाणिभ्यामालिङ्गितस्वाभवर्णा[17]भाः[51b] ।

आग्नेयकोणे वज्रचर्चिका शुक्ला[18] मोहयमारिवद्रूपचिन्हैः ।

नैर्ऋत्ये वज्रवाराही घोण[19]मुखी द्वेषकालाग्निसदृशी ।

वायव्ये वज्रसरस्वती रागकालारिरिव ।

ईशाने गौरीष्यायमारिरिव ।

अत्र वैरोचनादयो विश्ववज्रस्यारमूलेषु कोणेषु च वज्रचर्चिकाद्याः सस्वाभोपायाः ।

---

1 B °रिम° 2 B °यार° 3 B omits °क्रुद्ध° 4 B omits 5 C °क्रान्तः 6 C °म्बी 7 B omits ज्वलन्° 8 B °श्लि° 9 C °ज्ञामा° 10 B omits 11 B वज्रा° 12 B omits the portion from °नन्तादि...म्भोजे बिभ्राणः in the next para 13 B °श्चामीकराभः 14 B °क्रेण 15 B °टक° 16 B omits कप्रधान° 17 B °र° 18 C गुह्य° 19 B °र°

पूर्वद्वारे मुद्गर[1]यमारिः कृष्णः कृष्णसितरक्तवक्त्रत्रयः सव्याभ्यां वज्रमुद्गरासी वामाभ्यां मणिपद्मे दधानः।

दक्षिणे दण्डयमारिः शुभ्रः सितनीलरक्तत्रिमुखः सव्याभ्यां दण्डासी वामाभ्यां पद्मचक्रे बिभ्राणः।

पश्चि[52a]मे पद्मयमारी रागयमारिरिव।

उत्तरे खड्गयमारिरीर्ष्यायमारिरिव[2] किञ्चिन्नीलः।

सर्वे क्रूरभुजङ्गभूषणा अट्टाट्टहासिनः पिङ्गोर्ध्वज्वलत्केशा दंष्ट्राकरालवदनाः[3] कर्त्रिकपाल-भृत्प्रधानभुजाक्रोडितस्वाभप्रज्ञाः।

अत्र वैरोचनो देव्यश्च विश्वाब्जसूर्यस्थाः। [4]अन्यास्तु देवता विश्वाम्भोजसूर्यस्थाः।

मण्डलस्याग्न्यादिचतुःकोणेषु विश्वपद्मस्थानि पद्मभाजनानि चत्वारि शुक्ररजः-पञ्चामृतपञ्चप्रदीपपूर्णानि।

कुलेशास्तु मूर्ध्नि कृष्णयमारे[रक्षोभ्यः[5]] वैरोचनादिचतुर्णामपि। ते यथाक्रमं लो[6]चनादीनां मुद्गरयमार्यादीनां च।

भगवतो हृद्बीजं यँ। ओँ ह्रीः[7] ष्ट्रीः विकृतान[52b]न हूँ हूँ फट् फट् स्वाहेति हृदयम्। सार्वकर्मिकश्चायं मन्त्रः।

॥ इति यमारिमण्डलम् ॥

---

1 B मुद्गल° 2 B omits उत्तरे...रिवा 3 C क्त्राः 4 B omits this sentence. 5 Mss स्यात्मनो 6 B गे° 7 C ह्रीँ.

## [ अथ वज्रतारामण्डलम् । ]

वज्रतारामण्डले वज्रपञ्जरान्तर्धर्मोदयागर्भकूटागारवलयस्य नाभौ विश्वाष्टदलकमलस्य कर्णिकायां चन्द्रे भगवती वज्रतारा सुवर्णवर्णा पञ्चबुद्धमुकुटा हेमाभशुभ्रनीललोहितमूलसव्य-पश्चिमोत्तरचतुर्वक्त्रा अष्टभुजा सव्यैर्वज्रं पाशं शरं शङ्खं च बिभ्रती वामैः पीतोत्पलं चापमङ्कुशं तर्जनीं च ।

पूर्वदले पुष्पतारा शुक्ला कराभ्यां पुष्पदाम बिभ्रती[1] ।

दक्षिणे धूपतारा कृष्णा हस्ताभ्यां धूपकटच्छुं दधाना ।

प[53a]श्चिमे दीपतारा पीता दीपशाखान्वितकरद्वया ।

उत्तरे गन्धतारा रक्ता गन्धशङ्खोद्य[2]तकरद्वया ।

चतस्रोऽपि देव्यश्चन्द्रस्थाः ।

अग्न्यादिदलेषु वैरोचनादिवर्णाश्चक्रवज्रपद्मखड्गाः ।

द्वितीय[3]पुटे पूर्वद्वारे वज्राङ्कुशी शुक्लाङ्कुशाङ्क[4]सव्यकरा ।

दक्षिणे वज्रपाशी पीता पाशभृत्सव्यपाणिपल्लवा ।

पश्चिमे वज्रस्फोटा रक्ता वज्रस्फोटाङ्कसव्यकरा ।

उत्तरे वज्रघण्टा श्यामा वज्रघण्टाङ्कदक्षिणभुजा ।

आग्नेयादिकोणस्थविश्वाम्बुजे[5]षु लोचनादिविशुद्धया
बोधिचित्तं घ[53b]टो मेरु[6]र्वह्निकुण्डं महाध्वजः ।

ऊर्ध्वे उष्णीषविजया शुक्ला चक्रभृत्सव्यभुजा ।

अधः सुम्भा नीला सव्येन नागपाशधरा ।

एताः षड्[7]देव्यः सतर्जनीक[8]वामकरा विश्वाब्जसूर्यस्थाः । दशापि द्विभुजैकवक्त्राः । द्वा[9]दशापि वज्रपर्यङ्किणश्चलत्कनककुण्डला विचित्रवस्त्ररत्ननेपथ्याः पद्मरागप्रभाः ।

वज्रतारायाः कुलेशो रत्नेशः[10] ।

पुष्पतारादीनां वैरोचनाक्षोभ्यामिताभामोघसिद्धयः[11] ।

---

1 B °भर्त्ति 2 B °द्रुज° 3 C adds °तृतीय° 4 B °शं चक्रं 5 C °ब्जे° 6 C °टपूर्गं व° 7 C दश° 8 B तर्जनी only. 9 C एका° 10 B °त्नः 11 B °द्धिः

वज्राङ्कुश्या[1]दीनां च ।

उष्णीषाया रत्नेशः ।

सुम्भाया अक्षोभ्यः ।

भगवत्या हृद्बीजं ताँ[2] । ओँ तारे तु[54a]त्तारे तुरे स्वाहा इति हृदयम् । सा[3]र्वकर्मिकश्चाप्ययं[4] मन्त्रः ।

॥ इति वज्रतारामण्डलम् ॥

---

1 B °शा° 2 B त्रा 3 B स° 4 B °कर्मस्य.

# [ अथ मारीचीमण्डलम् । ]

मारीची[1]मण्डले वज्रपञ्जराभ्यन्तरस्थधर्मोदयोदरे[2] कूटागारम्। नात्र धर्मोदयासुमेरूपरि कूटागारमिति कश्चित् । कूटागारस्य[3] नाभौ चैत्यगुहागर्भे विश्वसरोजस्थ[4]चन्द्रे सूर्ये वा प्रत्यालीढेन स्थिता भगवती मारीची पीता विचित्ररत्नमुकुटी चैत्यालङ्कृतमूर्धजा विचित्ररत्नाभरणमण्डिता त्रिमुखा। मूलं पीतं सव्यं सितं वामं कृष्णं वराहमुखं[5] क्रोधभृकुटीकटाक्षलक्षितं ललज्जिह्वं भीषणम्। षड्भुजा दक्षिणैः शरं वज्रं सूची वामैः[54b]श्चापसूत्रसपुष्पाशोकपल्लवान् बिभ्रती[7] परिधृतनीलाम्बरा विचित्रनीलकञ्चुकोत्तरीया सुवर्णवर्णशूकरारूढा सुवर्णवराहपरिकलि[9]ताशोककुसुमदामकृ[10]तशिरोभूषणा।

पूर्वस्यां दिशि अर्कमसिर्बन्धूकवर्णा सूचीसूत्रभृत्सव्येतरकरा।

दक्षिणस्यां [ इन्दुमसिः[11] ] सुवर्णवर्णा सव्येन ससूत्रसूची वामेनाशोकपल्लवं बिभ्राणा।

पश्चिमाया[12]मन्तर्धान[13]मसिः पीता सव्येनाशोककिसलयं वामेन सतर्जनीकपाशं बिभ्रती।

उत्तरस्यां तेजोमसिर[14]रुणवर्णा शरचापधरसव्येतरकरा।

आग्नेया[55a]दिविदिक्षु उदयमसिर्गुल्मसिर्वन्मसि[15]श्चीवरमसिश्च यथाक्रममर्कमस्यादिवर्णचिन्हाः।

द्वितीयपुटे पट्टिकायां पूर्वस्यां महाचीवरमसिर्वराहमुखी च कृष्णा दंष्ट्रोत्कटभीषणा सव्येन वज्राङ्कुशं वामेन वज्र[16]पाशं दधाना।

दक्षिणस्यां पदाक्रममसि[17]र्वराली च पीता सव्येनाशोकपल्लवं[18] वामे वज्रं धरन्ती।

पश्चिमायां पराक्रममसिर्वदाली च रक्ता सव्येतराभ्यां गृहीतशरचापे।

उत्तरस्यां उरग[19]मसिर्वराही[20] च हरिता सूचीसूत्रभृत्सव्यवामभुजा।

आग्नेयकोणे वर्त्ताली[21] अरुणवर्णा सूचीसूत्रभृत्सव्यवामहस्ता।

नै[55b]र्ऋत्ये वदाली[22] पीता दक्षिणेन ससूत्रसूची वामेन सपल्लवाशोककुसुमस्तवकं बिभ्राणा।

---

1 B °चि° 2 B °दया° 3 B omits 4 B °रुहस्थ° 5 6 C °खभूर्ध्वं 7 8 B विचित्र° 9 B °रि° 10 B °सुमकृ° 11 C अर्कमसिः B अर्कमणि 12 B °मे 13 B °मन्त्रध्यान 14 B व° 15 B omits °वन्मसि° 16 B omits वज्र° 17 B °कर्ममि° 18 C °त्रं 19 B °र्ग° C °र्म° 20 C °ली 21 B वेत्तारी 22 B वेत्तारिः

वायव्ये वराली गौराङ्गी सव्येतरकराभ्यामशोकपल्लवपाशौ बिभ्रती ।

ईशाने वराहमुखी रक्ता शरधनुर्धरकरद्वया ।

पूर्वादिद्वारेषु आलो तालो कालो मत्सरो[1] सव्यमूर्ध्वाधो यथाक्रमं सितपीतरक्तहरिता वज्राङ्कुशपाशस्फोटावेशभृद्भुज[2]युग्मा: ।

एताश्चतुर्विंशतिरर्कमस्यादिदेव्योऽभिनवोद्भिन्नयौवनाः चैत्यालङ्कृतशिरस्यो विचित्ररत्नाभरणा विचित्रनीलाम्बरकञ्चुकोत्तरीया [56a] स्त्रिनेत्रैकवराहवक्त्रा द्विभुजा: सुवर्णवराहारूढाः ।

सुवर्णवराहयूथपरिकलिता द्वारपाल्यो विश्वाब्जसूर्येष्वालीढस्थाः ।

अन्यास्तु विंशतिर्विश्वाम्भोजचन्द्रेषु प्रत्यालीढस्था: ।

मारीच्याः कुलेशः शाश्वत:[3] ।

पूर्वादिदिग्वर्त्तिनीनामक्षोभ्यरत्नेशामिताभामोघसिद्धयः ।

अग्न्यादिविदिग्वर्त्तिनीनां चैत्यका:[4] ।

सितानां वैरोचनः ।

कृष्णानामक्षोभ्यः ।

पीतानां रत्नसम्भवः ।

रक्तानाममिताभः ।

हरितानाममोघसिद्धिरित्यपरः[5] ।

मारीच्या हृद्बीजं माँ । ओँ[6] मारीच्यै स्वाहेति हृदयम् । ओँ मारीच्यै हूँ सर्वविघ्नानुत्सादय[7] हूँ फट् स्वाहे [56b] ति सा[8]र्वकर्मिक[9]मन्त्रः ।

॥ इति मारीचीमण्डलम् ॥

---

1 C °त्मलो 2 C °पाशहृद्बीज° 3 B omits 4 C °को 5 C °त्यारे 6 dropped in B 7 B °ये 8 B स° 9 B °र्म°

# [ अथ पञ्चरक्षामण्डलम् । ]

पञ्चरक्षामण्डले वज्रपञ्जरस्य मध्ये सुमेरूपरि कूटागारस्तस्य मध्ये विश्वव्रज्रवेदिस्थित-विश्वपद्मचन्द्रे महाप्रतिसरा पीताभ[1]रक्तप्रभामण्डला चतुर्मुखा मूलमुखं पीतं सव्यं सितं पश्चिमं नीलं वामं रक्तं[2] दक्षिणेन रत्नच्छटा[3]चक्रवज्रशरखड्गवरदमुद्रा वामैर्वज्रपाशं त्रिशूलं धनुः परशुं शङ्खं च बिभ्रतीति द्वादशभुजा[4] चैत्यालङ्कृताशिरस्का वज्रपर्यङ्कासीना[5] ।

तस्याः पूर्वस्यां दिशि महासाहस्रप्रमर्दिनी विश्वाम्भोजचन्द्रे ललिताक्षेपेण निषण्णा शुक्ला चन्द्रप्रभामण्डला[6][ 57a ]चतुर्मुखी मूलं सितं सव्यं कृष्णं पृष्ठं पीतं वामं हरितं सव्यभुजैः पद्मस्थाष्टारचक्रं वरदमङ्कुशं बाणं कृपाणञ्च वामैर्वज्रतर्जनीं पाशं धनुः पाशञ्चेति दशभुजा[7] ।

दक्षिणस्यां विश्वाम्भोजसूर्ये सूर्य[8]प्रभा महामन्त्रानुसारिणी वज्रपर्यङ्किणी कृष्णा कृष्णसितरक्तमूलसव्यवाममुखी द्वादशभुजा सव्येतराभ्यां धर्मचक्रमुद्रां बिभ्राणाऽपराभ्यां समाधिमुद्रामपरै[9]र्दक्षिणैर्वज्रबाणवरदाभयमुद्रा वामैस्तर्जनीपाशं चापं[10] रत्नच्छटां पद्माङ्कित-कलशं च ।

पश्चिमायां विश्वाब्ज[11]सूर्ये अर्धपर्यङ्कनिषण्णा सूर्यप्रभा महाशीतवती रक्ता रक्तसित-कृष्णमूलसव्येतरवक्त्राऽष्टभुजा सव्यैः सपद्माऽभयं शरं वज्रं खड्गं वामैस्तर्जनीपाशं चापं रत्न-ध्वजं हृदि पुस्तकं च बिभ्रती ।

उत्तरस्यां वि[ 57b ]श्वाब्जचन्द्रे[12] चन्द्रप्रभा सत्त्वपर्यङ्की महामायूरी हरिता हरित-कृष्णशुक्लमूलसव्येतरवक्त्राऽष्टभुजा सव्यैर्मयूरपिच्छं बाणं वरदं खड्गं च वामैः पात्रोपरि भिक्षुं चापमुत्सङ्गस्थरत्नच्छटावर्षिघटं विश्ववज्ररत्नाङ्कध्वजं च बिभ्राणा ।

द्वितीयपुटे आग्नेयकोणे काली[13] कृष्णा कराभ्यां गृहीतशङ्खा । १ ।

नैर्ऋत्ये काल[14]रात्रिः पीता कराभ्यां गृहीतवज्राङ्कितध्वजा । २ ।

वायव्ये कालकण्ठी[15] रक्ता कराभ्यां गृहीतपरशुः । ३ ।

ऐशान्यां महायशा[16] श्वेता हस्ताभ्यां गृहीतत्रिशूला । ४ ।

---

1 C °ता 2 C adds द्वादशभुजा 3 B °त्रा 4 C omits 5 C °ङ्किनी 6 B ले 7 C omits 8 B omits सूर्य° 9 B omits समाधिमुद्रामपरै° 10 C omits चापं 11 B omits सूर्ये to खड्गं 12 B omits चन्द्रे 13 C °ल° 14 B °ला° 15 B °र्णि 16 B सिता.

एताश्चतस्रो द्विभुजैकमुखाः । नवाप्येता विचित्ररत्नाभरणाम्बरा रत्नमुकु[58a] टिन्यः प्रतिमुखं त्रिनेत्राः यथाक्रमं रत्नेशवैरोचनाक्षोभ्यामिताभामोघसिध्यक्षोभ्यरत्नेशामिताभ-वैरोचनैर्मुद्रिताः ।

पूर्वादिद्वारे विश्वाम्भोज[1]सूर्येषु वज्राङ्कुशीवज्रपाशीवज्रस्फाटावज्रावेश्य[2]ः पूर्ववत् ।

महाप्रतिसरादीनां बीजं ओँ । ओँ मणिधरि वज्रिणि महाप्रतिसरे हूँ हूँ फट् फट् स्वाहेति हृदयम् ।

बीजं बूँ[3] । ओँ आः[4] महासाहस्रप्रमर्द्दिनि बूँ हूँ हृदयम् ।

बीजं हूँ[5] । ओँ आः[6] महामन्त्रानुसारिणि हूँ हूँ हृदयम् ।

बीजं जीँ[7] । ओँ आः[8] महाशीतवति जीँ हूँ हृदयम् ।

बीजं [ माँ ][9] । ओँ महामायूरी विद्याराज्ञी[10] हूँ हूँ फट् फट् स्वाहेति हृदयम्[11] ।

प्रयोजनवशादासा[12]मन्यतमा चक्रेशा क्रियते । चक्रेशाहृदयमन्त्रोऽत्र[13] सा[58b]र्व-कार्मिकः ।

॥ इति पञ्चरक्षामण्डलम् ॥

---

1 C °ब्ज 2 C °शाः 3 B omits the Bija 4 B omits ओँ आः 5 B omist the Bija 6 B omits ओँ आः 7 omits the Bija 8 B omits ओँ आः 9 B omits the Bija C wrongly states जीँ 10 C adds जीँ 11 B omits 12 B °जनसा° 13 omits मन्त्रोऽत्र.

## [ अथ वज्रधातुमण्डलम् । ]

वज्रधातुमण्डले वज्रपञ्जरोदरे द्वीपोपद्वीप[1]सप्तसमुद्रादि[2]परिकलितसुमेरूपरि कूटागारं तस्य मध्ये सिंहोपरि विश्वाम्भोजस्य कर्णिकायां भगवान् वैरोचनो वज्रपर्यङ्केण[3]निषण्णः शुभ्रः सूर्यप्रभः स्फुरत्पञ्चबुद्धरत्नमुकुटमण्डितजटाविटपी विचित्ररत्नाभरणाम्बरः शान्तः सितपीत-रक्तहरितचतु[4]र्वक्त्रोऽष्टभुजः सव्यवामाभ्यां धृतसवज्र[5]बोध्यङ्गीमुद्रोऽपराभ्यां धृतध्यानमुद्रो दक्षिणाभ्यामक्षमालाशरधरो वामाभ्यां चक्रचापभृत्। अथवा शुक्लैकमुखः [6]सवज्रबोध्यङ्गीमुद्रा-भृद्भुजद्वयः। वामे वज्रमुष्टेस्तर्जन्या उत्थिताया दक्षिणे वज्रमुष्टिना ग्रहणे सति बोध्यङ्गीमुद्रा।

पूर्वस्मिन्दले सत्त्ववज्री नी[59a]ला सव्येन पञ्चसूचिकरक्तवज्रं वामेन तर्जनीपाशं दधाना[7]।

दक्षिणे रत्नवज्री पीता सव्येन पञ्चसूचिकवज्राशिखरत्नं बिभ्रती वामेन तर्जयन्ती।

पश्चिमेन धर्मवज्री रक्ता पञ्चसूचिकवज्राङ्कमष्टदलकमलं रक्तं सव्येन बिभ्राणा वामेन पद्मम्।

उत्तरे कर्मवज्री हरिता सव्येन पञ्चतथागतवर्णद्वादशसूचिकं विश्ववज्रं धरन्ती[8] वामेन तर्जयन्ती।

तत[9]ः पूर्वस्यां दिशि दन्तीन्द्रोपरि विश्वपद्मस्य पुष्करेऽक्षोभ्यो वज्रपर्यङ्की[10] नीलः सव्यकरेण मध्याङ्गुल्या नीलपञ्चसूचिकवज्रं धृत्वा भूस्पर्शाभिनयं कुर्वन् वामहस्त[11]मुत्तानमुत्सङ्गे स्थापितम्[59b]।

पूर्वदले वज्रसत्त्वः सितः सव्यकरे मध्याङ्गुल्या हृद्युत्कर्षणयोगेन वज्रं वामे वज्रमुष्ट्या कटिस्थया सगर्व[12] घण्टां बिभ्राणः।

दक्षिणे वज्रराजः पीतः सव्यस्थवज्राङ्कुशेनाकर्षणाभिनयी[13] वामेन पाशभृत्। भुज-द्वयधृताङ्कुशेनाकर्षाभिनयं कुर्वन्निति कश्चित्।

उत्तरे वज्ररागो रक्तो वामेतराभ्यां धनुर्बाणधरः।

पश्चिमे वज्रसाधुर्मरकताभः सवज्रभुजद्वयेन हृदि साधुकारदानाभिनयं कुर्वाणः।

दक्षिणस्याम[14]श्वपृष्टे विश्वाम्बुजस्य कर्णिकायां[15] रत्नसम्भवो वज्रपर्यङ्की पीतः सव्येन वज्राङ्करत्नं मध्याङ्गुल्या धृत्वा वरदानाभिनयं कुर्वा[60a]णो वाममुत्तानमुत्सङ्गे।

1 C °महाद्वीप° 2 B °प्रभृति° 3 B °ङ्क° 4 B सितरक्तत्रि° 5 B omits सवज्र° 6 B omits सवज्र to बोध्यङ्गीमुद्रा 7 B omits 8 B omits 9 B °त्र 10 B °ङ्क° 11 B °नयं ह° 12 मव्येन 13 B °र्षणं 14 B °णे श्यामा° 15 B omits.

पूर्वदले वज्ररत्नः पीतः सव्ये वज्रमुष्टिना प्रान्तयोर्वज्रद्वयाङ्कितरत्नमालां स्वा[1]भिषेकस्थाने बन्धयन् वामेन वज्रघण्टां सगर्वं दधानः।

दक्षिणे वज्रतेजो रक्तो हृदि करद्वयधृतसूर्येणावभासयति।

उत्तरे वज्रकेतुः श्यामो वामबाहुस्थं करद्वयगृहीतचिन्तामणिध्वजं दर्शयति।

पश्चिमे वज्रहासः शुक्लः सव्येन दन्तपङ्क्तियुक्तवज्रं[2] गृह्णंस्तथा वामे दन्तपङ्क्तिद्वययुक्त[3]-वज्रद्वयमास्ये निवेशयति।

पश्चिमायां मयूरोपरि विश्वसरोजस्य वरटकेऽमिताभो वज्रपर्यङ्की रक्तः, उत्तानवामेतरकरो[60b][4]त्सङ्गोपरि स्थापनात्कृत[5]समाधिमुद्रः [6]दक्षिणपाणिमध्याङ्गुल्या वज्राङ्कपङ्कजं धृत्वा।

पूर्वदले वज्रध[7]र्मः सितरक्तो वामे गर्वगृहीतसनालकमलदलं[8] दक्षिणेन विकाशयति।

दक्षिणे वज्रतीक्ष्णो गगनश्यामो वामेन हृदि प्रज्ञापारमितापुस्तकं दक्षिणेनोद्यतकृपाणं बिभ्राणः।

उत्तरे वज्रहेतुः सुवर्णवर्णो वामकर[9]स्थाष्टारचक्रं दक्षिणपाणिमध्याङ्गुल्याऽलातचक्रमिव प्रवर्त्तयतीति धृत[10]धर्मचक्रमुद्रः।

पश्चिमे वज्रभाषो रक्तो वामेन धर्मशङ्खं सव्येनैकसूचिकवज्रजिह्वां गृण्हानः।

उत्तरस्यां गरुडोपरि वि[61a]श्वाम्भोजस्य कर्णिकायाममोघसिद्धिर्वज्रपर्यङ्की श्यामो दक्षिणपाणिना विश्ववज्रं मध्याङ्गुल्या बिभ्रदभयदानाभिनयी वाममुत्तानमुत्सङ्गे स्थापयन्।

प्राची[11]दले वज्रकर्मो हरितः[12] सव्येन हृद्युत्कर्षणयोगतो द्वादशसूचिकविश्ववज्रं[13] वामे सगर्वं[14] विश्ववज्राङ्कघण्टां दधानः। अथवा कृतकपोताञ्जलिना हस्तद्वयेन विश्ववज्रं मूर्ध्नि।

दक्षिणे वज्ररक्षः पीतः करद्वयेन गृहीतवज्रकवचः[15]।

उत्तरे वज्रयक्षः कृष्णः कराभ्यां कनिष्ठावज्रदंष्ट्रायुधाग्रद्वयं[16] स्वमुखे धारयन् दुष्टान् भीषयति।

पश्चिमे वज्रसन्धिः पीतो वज्रबन्धे सति[17] वज्रमुष्टिभ्यां गृहीतपञ्चसूचिककुलिशं पी[61b]डयति।

गर्भकूटागारस्याग्नेयपद्मे ला[18]स्या सिता वज्रगर्वमुद्रया कराभ्यां वज्रद्वयं[19] बिभ्रती।

1 B लाम्वा 2 B omits 3 B omits °युक्त° 4 B °मेतरो° 5 C °हृत्° 6 C omit दक्षिण° to धृत्वा 7 B °ष° 8 B °कमलं 9 C °टि° 10 B omits धृत° 11 B °चीन° 12 B रक्तः 13 B omits 14 B omits; C गर्वया 15 C repeats कर°...कवच:। 16 C हृदयं 17 C मन्धेः सन्धि 18 C वज्रला°. 19 C °हृदयं.

नैर्ऋत्यपद्मे माला पीता भुजाभ्यां रत्नमालाधारिणी ।

वायव्याम्बुजे[1] गीता रक्ता हस्ताभ्यां वीणां वादयन्ती ।

ऐशान्याब्जे नृत्या श्यामा गृहीतत्रिसूचिकवज्रहस्ताभ्यां नृत्यन्ती ।

गर्भकूटागाराद्बहिः पट्टिकायाः पूर्वस्यां पद्मेषु मैत्रेयामोघदर्शिसर्वापायञ्जह[2]सर्वशोकतमोनिर्घातमत्यो[3] अक्षोभ्यसदृशाः ।

दक्षिणस्यां सरोजेषु गन्धहस्तित्रिशूलङ्गमगगनगञ्जज्ञानकेतवो[4] रत्नसम्भवसदृशा[5]: ।

पश्चिमायां पङ्कजेषु अमित[6]प्रभचन्द्रप्रभभद्रपालजालिनीप्रभा अमिताभसन्नि[ 62a ]भाः ।

उत्तरस्यां सरोरुहेषु वज्रगर्भा[7]क्षयमतिप्रति[8]भानकूटसमन्तभद्रा अमोघसिद्धिसदृशाः[9] ।

अथवा चतूरत्नभद्रादकल्पिकमैत्रेयादिबोधिसत्त्वसहस्रं भाव्यम् । प्रागादिपट्टिषु तन्नामानि तु विस्तरत्रासान्नोक्तानि ।

आग्नेयकोणकमले वज्रधूपा सिता ।

नैर्ऋत्यपद्मे वज्रपुष्पा पीता ।

वायव्येऽब्जे[10] वज्रालोका सितरक्ता ।

ऐशान्याम्भोजे वज्रगन्धा श्यामा ।

एता धूपादयः पूर्ववच्चि[11]ह्नधारिण्यः ।

पूर्वादिद्वारपद्मेषु वज्राङ्कुशावज्रपाशा[12]वज्रस्फोटावज्रावेशा यथाक्रमं सितपीतरक्तहरिताः पूर्ववच्चिह्नधराः ।

इह भग[ 62b ]वतो वज्रधातोरन्या देवताः[13] सर्वा द्विभुजा एकवक्त्रा विचित्रवस्त्ररत्नाभरणा रत्नमुकुटिनो मण्डलेशाभिमुखा वज्रसत्त्वादीन् विहाय ।

वज्रसत्त्वादयो हि[14] षोडशबोधिसत्त्वाः स्वस्वाधिपतितथागताभिमुखाः ।

वैरोचनादयो वज्रावेशपर्यन्ता देवता यथोक्तस्व[15]कर्णिकास्वद[16]लेषु च चन्द्रासनाः सूर्यप्रभाः[17] ।

पञ्चतथागतेभ्योऽन्या अष्टचत्वारिंशद्देवताः सत्त्वपर्यङ्कनिषण्णाः ।

इह भगवान्वज्रधातुर्वैरोचनः सुविशुद्धधर्मधातुज्ञाना[18]त्मा स्वाभवज्रसत्त्वेन मुद्रितः ।

---

1 B °व्यां 2 B omits the name I सर्वापायञ्जह । 3 B °नयो 4 B °तु 5 C °म्भववत् 6 C °त्र° 7 B °र्वा° 8 B omits प्रति° 9 B omits °सदृशाः 10 B °व्ये 11 B °र्वच्चि° 12 B omits °वज्रपाश° 13 B धातोरन्वेतो ? 14 B °त्त्वादि° 15 B °त्तक° 16 B °काद° 17 B omits 18 B °नस्वभावा°.

आदर्श[1]ज्ञानादिस्वभावानामक्षोभ्यादिचतुस्तथागतानां कुलेशो वैरो[63a]चनः ।
सत्त्ववज्र्यादिचतुर्णां[2] लास्याधूपयोर्मैत्रेयादिचतुर्णां[3] वज्राङ्कुशस्य चा[4]क्षोभ्यः ।
रत्नवज्र्या[5]दिचतुर्णां मालापुष्पयोर्गन्धहस्त्यादिचतुर्णां वज्रपाशस्य च रत्नसम्भवः ।
धर्मवज्र्यादिचतुर्णां गीतादीपयोरमितप्रभादिचतुर्णां व[6]ज्रस्फोटस्य चामिताभः ।
कर्मवज्र्यादिचतुर्णां नृत्यागन्धयोर्वज्रगर्भादिचतुर्णां वज्रावेशस्य चा[7]मोघसिद्धिः ।
अत्राभ्यन्तरे कूटागारद्वारेष्वपि वज्राङ्कुशादयो द्वारपालाश्चत्वारो ध्येया इति पक्षान्तरम् ।

वैरोचनस्य हृद्बीजं ओँ । ओँ सर्वतथागत महायोगी[8]श्वर हूँ इति हृदयम् । ओँ वज्रयक्ष हूँ इ[63b]ति वज्रयक्षस्य मन्त्रः सार्वकार्मिकः ।

यत्तु वज्रशेखरादि[9]तन्त्रेष्वन्यथाऽपि देवतासन्निवेशनमुक्तं तदत्र विस्तरत्रा[10]सान्नोक्तम् ।

॥ इति वज्रधातुमण्डलम् ॥

---

1 B °र्शन° 2 B °र्वर्णा° 3 B omits 4 B °शादि अ° 5 B °ज्रा° 6 B प्रभाव° 7 B °वेशा° 8 B °गे° 9 B °शत° 10 B omits तदत्र विस्तरत्रा°.

## [ अथ त्रिचत्वारिंशदात्मक-मञ्जुवज्रमण्डलम् । ]

त्रिचत्वारिंशदात्मकमञ्जुवज्रमण्डले वज्रपञ्जरादिकं कूटागारपर्यन्तं[1] प्रथमोक्तं मञ्जुवज्रमण्डलवत्[2] । किन्त्वत्र क्रोधा वक्ष्यमाणस्वरूपा इत्येकः पक्षः । वज्रपञ्जराभ्यन्तरे सुमेरूपरि विश्वाम्भोज[3]पुष्करस्थविश्वकुलिशवेद्यां कूटागारमिति द्वितीयः । पक्षद्वयेऽपि चैत्यान्तर्गतं कूटागारं तस्य नाभौ सिंहोपरि विश्वाम्भोजचन्द्रे[4] सत्त्वपर्यङ्कनिषण्णो भगवान् वैरोचनस्वभावो मञ्जुवज्रः कमनीयकनककान्तिः विचित्र[64a]कुसुमशोभितजटा[5]चीरत्रयविराजितः पीतनीलशुक्लसव्येतरवक्त्रः षड्भुजो दक्षिणैः खड्गवरदबाणान् वामैः प्रज्ञापारमितापुस्तकनीलाब्जधनूंषि[6] बिभ्राणः स्वाभवज्रधात्वी[7]श्वरीसमापन्नः ।

तस्य पूर्वकोष्ठे दन्तीन्द्रोपरि विश्वाब्जसूर्येऽक्षोभ्यो ललिताक्षेपेण स्थितो नीलो नील[8]शुक्लरक्तमूल[9]सव्येतरमुखोऽष्टभुजः सव्ये मध्याङ्गुल्या हृदि वज्रोत्कर्षणपरो वामे वज्र[10]मुष्टिगर्वगृहीतवज्रघण्टोऽन्यैर्द[11]क्षिणैः खड्गाङ्कुशशरान् वामैरङ्कुशपाशधनूंषि ।

दक्षिणेऽश्वोपरि विश्वाब्ज[12]सूर्ये सत्त्वपर्यङ्की रत्नसम्भवः पीतः पीतनील[13]शुक्लमूल[14]सव्येतरवक्त्रत्रयः षड्भुजः प्रधान[64b]भुजाभ्यां कृतसमाधिमुद्रः सव्याभ्यां रत्नखड्गौ वामाभ्यां[15] कुचवज्रे दधानः ।

पश्चिमे मयूरोपरि विश्वाब्जरवाव[16]मिताभः सत्त्वपर्यङ्की शुक्लनील[17]रक्तमूलसव्येतरवक्त्रः-षड्भुजो वामेन नालमादाय सगर्वं सव्येन हृदि पद्मं विकासयति[18] । सव्याभ्यामक्षसूत्रवज्र[19]धरो वामाभ्यां कुचकमण्डलुभृत् ।

उत्तरे गरुडोपरि विश्वाब्जसूर्येऽमोघसिद्धिः सत्त्वपर्यङ्की रक्तवर्णो रक्तनीलशुक्लमूलसव्यवाममुखः षड्भुजो द्वाभ्यामाबद्धध्यानमुद्रः सव्याभ्यां खड्गतर्जनीं वामाभ्यां कुचाङ्कुशौ बिभर्ति ।

ऐशान्यां लोचना पीता सत्त्वपर्यङ्किन्यष्ट[20]भुजा दक्षिणैर्वरदाभयव[65a]ज्रशरान् वामैस्तर्जनीपाशरत्नमञ्जर्यक्षसूत्रधनूंषि दधाना ।

---

1 B omits °पर्यन्तं 2 B °लं 3 B °श्वाब्ज° 4 B omits °चन्द्रे 5 B omits °जटा° 6 B °नुं 7 C °त्वे° 8 B omits नील 9 B omits °मूल° 10 B °माब्ज° 11 B °दन्यद° 12 B omits विश्वाब्ज 13 B °रक्त° 14 B omits °शुक्लमूल° 15 C omits रत्न...माभ्यां 16 B विश्वाम्भोजा° 17 B °पीत° 18 C °न्ती 19 B omits °वज्र° 20 B °कीन्येक°.

आग्नेये मामकी सत्त्वपर्यङ्किणी नीला सरोषं हसन्ती षड्भुजा सव्यैरभयवज्रबाणान् वामैस्तर्जनीपाशचापान् बिभ्राणा ।

नैर्ऋत्ये पाण्डरा शुभ्रा षड्भुजा सव्यैरभयवज्रशरान् वामैः पद्माक्षसूत्रचापान् बिभ्रती ललिताक्षेपिणी ।

वायव्ये तारा रक्ता[1]भा सत्त्वपर्यङ्किणी षड्भुजा सव्यैरभयवज्रशरान् वामैस्तर्जन्यु[2]त्पल-धनूंषि धरन्ती ।

द्वितीयपुटे पूर्वादिदिक्षु सत्त्ववज्रीधर्म[3]वज्रीकर्मवज्र्यः यथाक्रममक्षोभ्यादिभिः समानवर्णभुजायुधाः । किन्तु कुचग्रहणाभावा[65b]त् सत्त्ववज्री कर्मवज्री च तर्जनीं बिभर्ति धर्मवज्री पाशम् ।

ऐशान्यां चुन्दा[4] चन्द्रवर्णा षड्विंशतिभु[5]जा प्रधानाभ्यां हृदि मूलमुद्रां दक्षिणैरभयं खड्गं रत्नदाम बीजपूरं शरं[6] परशुं गदां मुद्गरमङ्कुशं वज्रं त्रिपताकाभिनयमक्षसूत्रं च; वामै-श्चिन्तामणिध्वजं पद्मं कमण्डलुं पाशं चापं शक्तिं चक्रं खड्गं तर्जनं[7] घटं भिण्डिपालं प्रज्ञापार-मितापुस्तकं च बिभ्रती स्वच्छकञ्चुकभृदुत्सङ्गबद्धोत्तरीया नवनाट्य[8]रसराशिः मूलमुखं श्वेतं दक्षिणं नीलं ललजिह्वमीषद्दंष्ट्राकरालं वामं पीतं गृहीताधरोष्ठम् । सम्पुटाञ्जलिं कृत्वा तर्जन्या मध्य[66a]मामध्यपर्वणि कुण्डलाकारेणावस्थाप्याङ्गुष्ठौ तर्जनीपार्श्वमूले धारयेदित्यस्या मूलमुद्रा ।

आग्नेय्यां रत्नोल्का पीता षड्भुजा द्वाभ्यां हृदि रत्नसम्पुटधारिणी[9] दक्षिणाभ्यामभय-शरौ वामाभ्यां तर्जनीधनूंषी[10] बिभ्रती ।

नैर्ऋत्यां भृकुटी श्वेता षड्भुजा सव्यैर्वज्रदण्डबाणान्[11] वामैस्तर्जनीकमण्डलुचापान् बिभ्राणा ।

वायव्ये वज्रशृङ्खला श्यामा षड्भुजा सव्यैर्वज्रशृङ्खलशरान् वामैस्तर्जनीपाशचापान् बिभ्रती[12] ।

एता ललिताक्षेपवत्यो द्वादशापि लोचनादिदेव्यश्चन्द्रासना रक्तप्रभामण्डलाः स्वस्व-कुलेशा इव[13] त्रिमुखाः ।

---

1 B °मरकता° 2 B °नीलो° 3 C °रत्न° 4 B omits 5 B षट्त्रिंशद्भु° 6 B omits शरं 7 omitted in 8 B वदना° 9 B °री 10 B °नू 11 B omits बाणान् 12 C °णा 13 B °लेन वामैस्तर्जनीपाशशरः

तृतीयपुटे मण्ड[66b]लपूर्वस्यां पङ्क्तिकायां मैत्रेयः सुवर्णवर्णो द्वाभ्यां कृतधर्मदेशना-मुद्रो वरदसव्यकरो वामेन सपुष्पनागकेसरपल्लवधरः ।

मञ्जुश्रीरुक्तरूपो निष्प्रज्ञस्त्वय[1]मिति विशेषः ।

गन्धहस्तिः श्यामो[2] वामेन कमलस्थ[3]हस्तिकरधारी सव्ये वरदः ।

ज्ञानकेतुः पीतो वामेन चिन्तामणिध्वजधारी सव्येन वरदः ।

दक्षिणस्यां भद्रपालो रक्तवर्णो वामेन रत्नभृद्दक्षिणेन वरदः ।

सागरमतिः सितो हस्तद्वयप्रसारितसर्वाङ्गुलिभिस्तरङ्गाभि[4]नयी ।

अक्षयमतिः सुवर्णवर्णो वाममुष्टिं हृद्यवस्थाप्य सव्येन वरदमुद्रः[5] ।

प्रतिभानकूटः श्याम उत्सङ्गवाममुष्टिर्दक्षिणेन छोटिकाप्रदः [67a] ।

पश्चिमायां महास्थाम[6]प्राप्तः[7] सितो वामेन षड्विकसित[8]पद्मधारी सव्येन वरदः ।

सर्वापाय[9]ञ्जहः शुक्लो हस्तद्वयेन पापक्षेपणाभिनयी ।

सर्वशोकतमोनिर्घात[10]मतिः कनककान्तिः हस्तद्वयसम्पुटेन प्रहाराभिनयी ।

जालिनीप्रभो रक्तो वामेनोत्पलस्थसूर्यमण्डलधारी सव्येन वरदः ।

उत्तरस्यां[11]चन्द्रप्रभश्चन्द्रवर्णो वामेनोत्पलस्थच[12]न्द्रमण्डलधारी दक्षिणेन वरदः ।

अमि[13]तप्रभो रक्तो हस्तद्वयेनाभिषेककलशधारी ।

गगनगञ्जः सुवर्णवर्णो वामे वज्रमुष्टिं गैत्रण कट्यां न्यस्य दक्षिणं गगने भ्रामयन् ।

सर्वनि[14]वरणविष्कम्भी नी[67b]लः शुक्लो वा वामेन भूस्पर्शी दक्षिणे[15]मुष्टितर्जन्यङ्गुष्ठौ संमील्य प्रशमा[16]भिनयी ।

अमी मैत्रेयादयो बोधिसत्त्वाश्चन्द्रासनाः[17] चन्द्रप्रभाः सत्त्वपर्यङ्किणस्त्रिनेत्राः स्वस्व-दिगधि[18]पतिवर्त्तिमुखाः षड्भुजा द्वाभ्यामाबद्धसमाधिमुद्रा द्वाभ्यां धनुर्बाणधारिणः । मैत्रेयमञ्जु-घोषयोस्तु न[19] समाधिमुद्रा ।

सर्वाश्च मञ्जुवज्रादिदेवता विचित्रवस्त्राभरण[20]रत्नैरलङ्कृताः जटामुकुटमण्डिताः सस्मेरवक्त्राः शृङ्गाररसो[21]त्सवाः ।

---

1 B °त्वया° 2 C °मा 3 B °लश° 4 B °लीभि° 5 B °दः 6 B °न° 7 B °प्तिः 8 B °विष° 9 B सर्वापाय° 10 B °तन° 11 B °रे 12 B °लच° 13 B °मृ° 14 B °नी° 15 C °णे 16 C पश्चा° 17 B omits °चन्द्रासनाः 18 B °दिग्धन° 19 B omits 20 C omits °भरण° 21 C °रसरतो°.

पूर्वद्वारे महिषोपरि यमान्तकः कृष्णः षड्भुजो दक्षिणैः खड्गवज्रशरधरः सपाशवामतर्जन्युत्थितया तर्जयन् द्वितीयवामेनालिङ्गितदेव्याः कुचं गृह्ण[68a]न्[1] तृ[2]तीयवामै रौप्यधनुर्धरः मरकतश्यामया देव्या द्विभुजया सव्येन नीलोत्पलधारिण्या कण्ठा[3]वसक्तवामभुजया विराजितदक्षिणपार्श्वः षट्चरणो वृहदुदरो नीलः षण्मुखो मूलमुखं साट्टहासं द्वितीयं भयावहं तृतीयं व्यावृत्तं चतुर्थं महाघोरं पञ्चमं वज्रदंष्ट्रं षष्ठं शिरस्थं ललज्जिह्वम् । अथवा शिरस्थं नीलं मूलादिमुखानि दक्षिणावर्त्तेन नीलसितपीतरक्तहरितानि ।

दक्षिणद्वारे[4]ऽपराजितः पीतः पीतकृष्णासितमूलसव्यवाममुखः षड्भुजः सव्यै[68b]र्वज्रगदाश[5]रान् वामैस्तर्जनीपाशं कुचं चापं च बिभर्ति ।

पश्चिमे हयग्रीवो रक्तः रक्तनीलसितमूलसव्यवाममुखः षड्भुजः सव्यैर्वज्रदण्डं कुणपं बाणं च वामैस्तर्जनीपाशं कुचं चापं च बिभर्त्ति ।

उत्तरेऽमृतकुण्डली नीलः पादावष्टब्धविघ्नः षड्भुजो दक्षिणैः खट्वाङ्गपरशुशरान् वामैस्तर्जनीपाशं कुचं चापं च बिभ्राणः ।

ईशानकोणे रत्नाचलोपर्यचलो नीलः केकरः षड्भुजः सव्यैः खड्गपाशशरभृद्वामैस्तर्जनीपाशं कुचधनुर्धरो वामलम्बितनीलै[6]कचीरधारी रुधिरार्द्रलेलिहत्सव्यासव्यजिह्वः ।

आग्नेये टक्किराजो नीलः षड्भुजो द्वा[69a]भ्यां कृतस्वमुद्रः सव्याभ्यां वज्रशरभृत् वामाभ्यां[7] कुच[8]चापधारी । वज्रमुष्टिद्वयमन्योन्यपृष्ठलग्नं कृत्वा कनिष्ठिके शृङ्खलीकृत्य तर्जन्यौ प्रसार्य[9] पाशी[10]कुर्यादिति टक्किराजस्य मुद्रा ।

नैर्ऋत्ये नीलदण्डो नीलः[11] षड्भुजो दक्षिणैर्वज्रदण्डशरान् वामैस्तर्जनीपाशकुचचापान् बिभर्ति ।

वायव्ये महाबलो नी[12]लोऽष्ट[13]भुजः सव्यैर्वज्रदण्डखड्गशरान् वामैस्तर्जनीपाशाङ्कुशमुद्गरचापान् बिभ्राणः ।

---

1 B adds सान्तसितपङ्कजभृद्वामभुजा and repeats thereafter दक्षिणैः खड्ग° ...°त्थितया । 2 C adds before this द्वादशालिङ्गितपरः सव्यकरेति द्विभुजा शुक्ला 3 C °र्णा° 4 C °षु 5 B वज्रश° 6 C °नैरैक° 7 B omits वज्र...वामाभ्यां 8 B वज्र° 9 B omits 10 B पाशं 11 B omits 12 B °लोऽन° 13 B षट्°.

चक्रेशस्योर्ध्वे सु[1]म्भराजो नीलः षड्भुजो द्वाभ्यामाबद्धवज्रहूँकारमुद्रः सव्याभ्यां खड्गबाणभृद्वामाभ्यां कुचचापधरः[2]। टङ्किराजमुद्रैश्चोत्सृततर्जनीद्वयात्सु[3]म्भराज[69b]मुद्रा।

सुम्भराजस्याधस्ताद्वज्र[4]पातालो नीलः षड्भुजः सव्यैर्वज्राङ्कुशबाणभृद्वामैः कुचसपाशशूलकार्मुकधरः।

विघ्नान्तकादयः सप्त नीलसितरक्तमूलसव्यवामवक्त्रत्रयाः।

दशापि क्रोधाः क्रुद्धदृष्टि[5]रक्तनेत्राः कृतभ्रूभङ्गा ईषद्ध[6]सितमूलमुखा व्याडदक्षिणास्याः[7] वामानना दंष्ट्राकरालिनो व्याघ्रचर्माम्बरोत्तरीयाः[8]कपालमालामुकुटा दीप्तबद्धोर्ध्वकुटिलकपिलकुन्तलाः पिङ्गलश्मश्रवो ललिताक्षेपिणो[9] नागाष्टविभूषणाः फणिपतिभिः[10] संस्फुरत्कारस्फारितफणैर्भीषणा विश्वाम्भोजसूर्येषु प्रत्यालीढेनास्थिताः। यमान्तकस्त्वालीढेनापि[11] वज्रपर्यङ्केणापि।

अष्टमद[12]ले[70a] सुम्भराजरूपेणैवावस्थानादुष्णीषचक्रवर्त्तिनः[13] पृथङ्माण्डलेयत्वं नोक्तं श्रीमायाजालतन्त्रविस्तरयोगनिर्देशात्।

मध्यक्रमनिर्देशे तु मञ्जुवज्रस्य उष्णीषोपरि रत्नाचलस्थपद्मसूर्ये[14] वज्रपर्यङ्कासीन उष्णीषचक्रवर्त्ती पीतः पीतनीलसितमूलसव्यवाममुखोऽष्टभुजो द्वाभ्यां कृतध्यानमुद्रः सव्यैश्चक्राक्षमालाशरधरो वामैश्चक्र[15]कुचचापभृत् विचित्रवस्त्ररत्ननेपथ्यो जटामुकुटी लोचनादिचतुर्देवीभिर्विराजितपार्श्वद्वय इत्युक्तम्। तदनुसारात् विस्तरयोगेऽपि उष्णीषः पृथङ्माण्डलेयस्तदुपरि सुम्भराजो ज्ञेय इति केचित्।

त्रिचत्वारिंश[70b]दपि देवताः प्रतिमुखं त्रिनेत्राः। अत्र[16] कुचग्रहणनयेन स्वकुचग्रहणमुक्तम्[17]। तच्च चतुर्णामक्षोभ्यादीनां समापन्नस्वाभप्रज्ञानाम्। क्रोधानान्तु स्वाभप्रज्ञया[18] वामपार्श्वस्थया इति ज्ञेयम्। यमान्तकादन्येषां विनैव प्रज्ञया तत्कुचग्रहणाभिनयेन स्वकुचग्रहणमित्यपरे[19]।

इह वैरोचनस्वभावो मञ्जुवज्रः सुविशुद्धधर्मधातुज्ञानात्मा स्वाभ[20]वज्रसत्त्वेन मुद्रितः आदर्शादिज्ञानस्वभावः।

अक्षोभ्यादितथागताश्चत्वारो लोचना चुन्दा च मञ्जुवज्रेण।

---

1 B °शसु° 2 B °धरः 3 B omits श्चोत्सृ...द्वयात् 4 B omits वज्र° 5 C °ष्ट° 6 C °द्विक° 7 B adds दंष्ट्रोष्ठ° 8 B °म्बरधरः 9 B omits °क्षेपिणो 10 B फणिभिः 11 B °कोऽपि 12 B अत्र मण्ड° 13 C °चक्रिणो 14 C omits °पद्मसूर्ये 15 B °र्वज्र° 16 B °त्राक्षसूत्र° 17 B कुचग्रहमुक्तः 18 B °नां and adds क्रोधानां तु 19 B °रः 20 C स्वभाव°.

मामकी सत्त्ववज्री मैत्रेयादयश्चत्वारो दशक्रोधाश्चाक्षोभ्येन ।

रत्नवज्री रत्नोल्का[1] [71a] भद्रपालादयश्चत्वारो रत्नसम्भवेन ।

पाण्डरा धर्मवज्री भृकुटी महास्थामप्राप्त्यादयश्चत्वारोऽमिताभेन ।

तारा कर्मवज्री वज्रशृङ्खला चन्द्रप्रभादयश्चत्वारोऽमो[2]घसिद्धिना ।

मञ्जुवज्रस्य हृद्बीजं मूः[3] । ओँ आः इति हृदयम् । ओँ अमृतकुण्डली विघ्नान्तक हूँ इति सा[4]र्वकर्मिकमन्त्रः ।

॥ इति त्रिचत्वारिंशदात्मकमञ्जुवज्रमण्डलम् । ॥

---

1 C रत्नालोका 2 B प्रभावयामो° 3 B omits 4 B स°.

## [ अथ धर्मधातुवागीश्वरमण्डलम् । ]

धर्मधातुवागीश्वर[1]मण्डल[2] इव वज्रपञ्जरादिभावनाव्यवस्था । यमान्तकादयः क्रोधाः । परमत्र[3] वक्ष्यमाणरूपाश्चैत्यमिह नास्ति ।

कूटागारस्य नाभौ विश्वाब्जकर्णिकास्थितसिंहोपरि विश्वाम्भोजचन्द्रे मञ्जुघोषो वज्रपर्यङ्की बालार्कमण्डलप्रभ[4]: सुवर्णवर्णः इन्द्र[71b]नीलाभ[5]सच्चीरो वज्ररत्नपद्मविश्ववज्रमाला-मुकुटोपरि पञ्चबुद्धरत्न[6]किरीटी विचित्ररत्नाभरणाम्बरः शृङ्गाररसराशिः पीतनीलरक्तसितमूल-सव्यपश्चिमवाममुखोऽष्टभुजो द्वाभ्यां धर्मचक्रमुद्रः सव्यैः कृपाणबाणवज्राणि वामैः प्रज्ञापारमिता-पुस्तकचापवज्रघण्टा बिभ्राणः ।

अष्टदलस्थसिंहोपरि पद्मचन्द्र[7]मण्डलेषु प्रागादिदिक्षु महोष्णीषसितातपत्रतेजोराशि-विजयोष्णीषाः ।

ईशानादिविदिक्षु विकीरणोद्गतमहोद्गतोजश्च[8] ।

एते अष्टो[9]ष्णीषाः वज्रपर्यङ्किणो रत्नमुकुट्यः पीतवर्णा द्विभुजा दक्षिणपाणिना चक्रा-कर्षणपरा[72a] वामकरेणावष्टब्धासनाः ।

अतः पूर्वकोष्ठस्य मध्ये गजराजेऽक्षोभ्यो नीलश्चतुर्वक्त्रो मूलास्यं नीलं सक्रोधशृङ्गारं सव्यं शुभ्रं व्यावृत्त[10] रौद्रं पश्चिमे पीतं वीरं वामं रक्तं दंष्ट्राकराल[11]मष्टभुजो दक्षिणैः खड्गवज्र-बाणाङ्कुशभृद्वा[12]मैस्तर्जनीघण्टापाशचापधरः वज्रसत्त्ववज्रराजवज्ररागवज्र[13]साधुभिः परिवृतः ।

दक्षिणकोष्ठस्य मध्येऽश्वराजे रत्नसम्भवः पीतः पीतकृष्णशुक्लरक्तचतुर्मुखोऽष्टभुजः सव्यैर्वज्रखड्गबाणाङ्कुशान् वामैश्चिन्तामणिध्वजं वज्रघण्टां पाशं चापं च दधानः वज्ररत्नवज्र-सूर्यवज्रकेतुवज्रहास्यैः परिवृतः ।

पश्चिमकोष्ठस्य[72b] मध्ये मयूरेऽमिताभो रक्तकृष्णशुक्लपीतचतुर्वक्त्रोऽष्टभुजः सव्यैर्वज्र-बाणखड्गाङ्कुशान् वामैः पद्मचापपाशघण्टाः बिभ्राणः वज्रधर्मवज्रतीक्ष्णहेतुवज्रभाषै[14] परिवृतः ।

उत्तरकोष्ठस्य मध्ये गरुडेऽमोघसिद्धिः श्यामः चतुर्मुखः मूलं श्यामं दंष्ट्राकरालं दक्षिणं पीतं शान्तं पश्चिमं रक्तं सशृङ्गारं वामं सितं शान्तमष्टभुजो दक्षिणैः खड्गवज्रबाणाङ्कुश-भृद्वा[15]मैस्तर्जनीघण्टाचापपाश[16]धरः वज्रकर्मवज्ररक्षवज्रयक्षवज्रसन्धिभिः[17] परिवृतः ।

---

1 B omits °वागीश्वर° 2 C adds अनन्तर° 3 B °मान्त° 4 B बाह्यमण्डलं 5 C omits इन्द्रनीलाभ 6 C omits °रत्न° 7 B °ञ्चन्दु° 8 B जयवः 9 B इतो° 10 C धातुं 11 C दंष्ट्रोष्ठं 12 B °शः वा° 13 B omits वज्र° 14 B °ष° 15 B °वज्रवा° 16 B omits °चापपाश° 17 B °सिद्धिभिः

अक्षोभ्यादयस्तथागताः स्ववाहनोपरि विश्वपद्मसूर्येषु वज्रपर्यङ्कनिषण्णा विचि[73a]त्र-रत्नाभरणाम्बरा रत्नमुकुटिनः ।

वज्रसत्त्वादयस्तु[1] षोडशेशानादिकोणस्थविश्वपद्मचन्द्रेषु वज्रधातुमण्डलोक्त[2]स्वरूपाः । अत्रापि दिक्षु स्थिता इत्यपि पक्षोऽस्ति[3] ।

ऐशानादिकोणस्थविश्वाब्जेन्दुषु सत्वपर्यङ्किण्यो लोचना मामकी पाण्डरा तारा यथा-क्रमं मञ्जुघोषाक्षोभ्यामितामोघसिद्धिसन्निभाः ।

पूर्वद्वारे वज्राङ्कुशो रक्तगौरो वज्राङ्कुश[4]भृदालीढस्थः ।

दक्षिणे वज्रपाशः पीतो वज्रपाशभृ[5]त्प्रत्यालीढस्थः ।

पश्चिमे वज्रस्फोटो रक्तः[6] वज्रशृङ्खल[7]भृ[8]द्भुजद्वयो वैशाखपदस्थः ।

उत्तरद्वारे वज्रावेशः श्यामो वज्रबन्धेन करद्वय[73b]गृहीतवज्रघण्टो मण्डलपदस्थः ।

एते चत्वारो विश्वाब्जसूर्येषु स्थिता द्विभुजाः त्रिनेत्रैकवदनाः पिङ्गो[9]र्ध्वकेशश्मश्रवोऽष्ट-नागाभरणाः ।

अतो गर्भमण्डलात् द्वितीयमण्डले पूर्वस्यां दिशि ईशान्याः[10] प्रभृति प्रदक्षिणं यथाक्रमं द्वादशभूमयो[11] द्विभुजा[12] दक्षिणे वज्रधारिण्यो वामेन स्वस्वचिह्नधराः ।

तत्राधिमुक्तिचर्याभूमिः पद्मरक्ता रक्तपद्म[13]धरा । १ ।

प्रमुदि[14]ता रक्ता चिन्तामणिभृत् । २ ।

विमला शुक्ला शुक्लकमल[15]धरा । ३ ।

प्रभाकरी रक्ता विश्वपद्मस्थसूर्यमण्डलधरा । ४ ।

अर्चिष्मती मरकत[16]वर्णा नीलोत्पलधरा । ५ ।

सुदुर्जया पीता उत्सङ्गस्थोत्तानपाणिना मरकत[17]मणिधरा । ६ ।

अ[74a]भिमुखी हेमवर्णा पद्मोपरि प्रज्ञापारमितापुस्तकधरा । ७ ।

दूरङ्गमा गगनश्यामा विश्वपद्मोपरि विश्ववज्रधरा । ८ ।

अच[18]ला शरच्चन्द्राभा चन्द्रस्थपञ्चसूचिकवज्राङ्कितपङ्कजस्य नालं सगर्वं बिभ्रती । ९ ।

साधुमती सिता खड्गाङ्कितोत्पलधरा । १० ।

---

1 B °यः 2 B °मरकत° 3 B °पि 4 B °ङ्क° 5 B omits °भृत्° 6 C °क्ता 7 B °ला° 8 C °हृ° 9 B °गलो° 10 C श्यामा 11 B °भुजा 12 B omits 13 B omits रक्तपद्म° 14 B °द्रि° 15 B °जलज° 16 C रक्त° 17 C °रक्त° 18 C °श्च°.

धर्ममेघा धर्ममेघपरिकलितप्रज्ञापारमितापुस्तकधरा । ११ ।

समन्तप्रभा मध्याह्नादि[1]त्यवर्णा पद्मोपरि सम्यक्सम्बोधिसूचकामिताभबु[2]द्धबिम्बधरा । १२ ।

दक्षिणस्यां द्वादशपारमिता द्विभुजाः सव्येन चिन्तामणिध्वजं[3] वामेन स्वस्वचिन्हधराः । प्रज्ञापारमिता त्वधिककरद्वया[4] ।

तत्र रत्न[5]पा[74b]रमिता रक्ता पद्मस्थचन्द्रमण्डलधरा । १ ।

दानपारमिता[6] सितरक्तवर्णा नानाधान्यमञ्जरीहस्ता । २ ।

शीलपारमिता श्वेता सपल्लवगौरकुसुमचक्रकरा । ३ ।

क्षा[7]न्तिपारमिता पीता सिताब्ज[8]धरा । ४ ।

वीर्यपारमिता मरकतवर्णा नीलोत्पलधरा । ५ ।

ध्यानपारमिता गगनश्यामा सिताब्ज[9]हस्ता । ६ ।

प्रज्ञापारमिता कमनीयकनककान्तिः पद्मस्थप्रज्ञापारमितापुस्तकधरा करद्वयेन धृतधर्मचक्रमुद्रा[10] । ७ ।

उपायपारमिता प्रियङ्गुश्यामा पीतपद्मस्थवज्रभृत् । ८ ।

प्रणिधानपारमिता नीलोत्पलवर्णा नीलोत्पलस्थ[11]खड्गधरा । ९ ।

बलपारमिता रक्ता प्रज्ञा[75a]पारमितापुस्तकधरा । १० ।

ज्ञानपारमिता शुभ्रा नानारत्नफलालङ्कृतबोधिवृक्ष[12]धरा । ११ ।

वज्रकर्मपारमिता विश्ववर्णा नीलोत्पलस्थविश्ववज्रधरा । १२ ।

पश्चिमायां द्वाद[13]शवशिता द्विभुजा दक्षिणेनाम्भोजभृतो वामेन सगर्वं स्वस्वाचिह्नधराः ।

तत्रायुर्वशिता सित[14]रक्तवर्णा पद्मरागमणिस्थसमाधिमुद्रामितायुर्बुद्धबिम्बधरा । १ ।

चित्तवशिता सिता रक्तपद्मसूचिकवज्रधरा[15] । २ ।

परिष्कारवशिता पीता[16] चिन्तामणिध्वजध[17]रा । ३ ।

कर्मवशिता हरिता[18] विश्ववज्रधरा । ४ ।

उपपत्तिवशिता विश्व[19]वर्णा विविधवर्ण[20]जातिलताहस्ता । ५ ।

---

1 B °ध्यादि° 2 B °कबु° 3 C °भृतो 4 B °करणा 5 B °रत्नपद्म° 6 B omits सित° 7 C शा° 8 B वज्र° 9 B °वज्र° 10 C adds °धरा 11 B omits नीलोत्पलस्थ° 12 C adds °लता° 13 C द° 14 omits सित° 15 B विश्ववगी विविधवर्णजातिलताहस्ता° 16 B omits 17 C °णिध° 18 B omits 19 B °विध° 20 B omits विविधवर्ण°.

ऋद्धिव[75b]शिता नभःश्यामा पद्मस्थसूर्यचन्द्रमण्डलधरा । ६ ।

अधिमुक्तिवशिता मृणालगौरा प्रियङ्गुकुसुममञ्जरीधरा । ७ ।

प्रणिधानवशिता पीता[1] नीलोत्पलहस्ता । ८ ।

ज्ञानवशिता सितनीला[2] नीलोत्पलस्थखड्गधरा । ९ ।

धर्मवशिता सिता[3] रक्तवर्णपद्मस्थभद्रघटहस्ता । १० ।

तथता श्वेता श्वेतशुभ्राम्भोजभृद्दक्षिणपाणिर्वामेन रत्नमञ्जरीधरा । ११ ।

बुद्धबोधिप्रभा[4] कनकाभा सव्येन पीतपद्मस्थपञ्चसूचिकवज्रधरा वामेन चिन्तामणिध्वजोपरि चक्रधरा । १२ ।

उत्तरस्यां द्वादशधारिण्यो द्विभुजाः सव्येन विश्ववज्रं बिभ्राणा वामे[76a]न सगर्वं[5] स्वस्वचिन्हभृतः ।

तत्र सु[6]मती पीता धान्यमञ्जरीधरा । १ ।

रत्नोल्का रक्ता चिन्तामणिध्वजधरा । २ ।

उष्णीषविजया सिता चन्द्रकान्त[7]मणिकलशहस्ता । ३ ।

मारी[8] रक्तगौरवर्णा[9] ससूत्रसूचीधरा । ४ ।

पर्णशबरी श्यामा मयूरपिच्छधरा । ५ ।

जाङ्गुली शुक्ला विषपुष्पमञ्जरीधरा । ६ ।

अनन्तमुखी प्रियङ्गुश्यामा रक्ताब्जस्थाक्षयमहानिधिकलशहस्ता[10] । ७ ।

चुन्दा शुक्ला अक्षसूत्रावलम्बितकमण्डलुधरा । ८ ।

प्रज्ञावर्धनी सिता नीलोत्पलखड्गधरा । ९ ।

सर्वकर्मावरणविशोधनी हरिता त्रिसूचिकवज्राङ्कसित[11]कमलधरा । १० ।

अक्षयज्ञानकरण्डा रक्ता[12] रत्नकरण्डधरा । ११ ।

सर्वबुद्धधर्म[76b]कोषवती पीता पद्मस्थनानारत्नपेटक[13]धरा । १२ ।

पूर्वद्वारे धर्मप्रतिसंवित्[14] सितरक्ता वज्राङ्कुशपाशभृद्भुजद्वया ।

दक्षिणेऽर्थप्रतिसंवित्[15] मरकतवर्णा सव्येतरभुजाभ्यां रत्नपाशभृत् ।

---

1 B omits 2 B omits 3 B omits 4 B °धिः 5 only in C 6 B वसु° 7 B omits चन्द्रकान्त° 8 B मारती or मालती 9 B omits °गौर° 10 In B रक्तपद्महस्ता only 11 C adds रक्त° 12 not in B 13 B °घट° 14 C °ता 15 C °ता.

पश्चिमे निरुक्तिप्रति[1]संवित् रक्ता बद्धपद्मान्तशृङ्खलाभृद्भुजद्वया ।

उत्तरे प्रतिभानप्रतिसंवित् मरकतश्यामा त्रिसूचिकवज्राङ्कितघण्टाव्यग्र[2]करद्वया ।

आग्नेयकोणे लास्या पीता सगर्वं कराभ्यां वज्रद्वयं बिभ्रती ।

नैर्ऋत्ये माला रक्तगौरवर्णा रत्नमालाभृद्भुजद्वया ।

वायव्ये गीता रक्ता हस्ताभ्यां वीणां वादयन्ती[77a] ।

ऐशान्यां नृत्या श्यामा धृतत्रिसूचिकवज्रघण्टानृत्य[3]द्भुजयुग्मा ।

एता अधिमुक्तिचर्याभूमिप्रभृतयो देव्यः सर्वा विचित्ररत्नाभरणाम्बरा रत्नमुकुटिन्यः अप्सरास्याः[4] शृङ्गारिण्यो विश्वपद्मेन्दुमण्डले सत्त्वपर्यङ्कनिषण्णाः ।

द्वारपाल्योऽपरसूर्येषु । ता अपि चन्द्रस्था [5]इत्यन्ये ।

तृतीयमण्डले ऐशान्यादिप्रभृतिबोधिसत्त्वाः ।

तत्र पूर्वस्यां पट्टिकायां समन्तभद्रः पीतः सव्येन वरदो वामेनोत्पलस्थखड्गधरः ।

अक्षयमतिः पीतः सव्येन खड्गं [6]वामेनाभयकमलं बिभर्त्ति ।

क्षितिगर्भः पीतो दक्षिणेन कृतभूस्पर्शो वामेनाब्जस्थ[7]कल्पद्रुमधरः [77b] ।

आकाशगर्भः श्यामः सव्येन सर्व[8]रत्नवर्षी वामेन चिन्तामणिभृत् ।

दक्षिणस्यां गगनगञ्जः पीतः सव्येन चिन्तामणिभृद्वामेन भद्रघटावलम्बित[9]कल्पवृक्षं दधानः ।

रत्नपाणिः श्यामो दक्षिणपाणिना रत्नं वामेनाब्जस्थ[10]चन्द्रमण्डलं बिभ्राणः ।

सागरमतिः सितः सव्येन शङ्खं वामेन वज्र[11]खड्गं दधानः ।

वज्रगर्भो नीलोत्पलदल[12]वर्णो दक्षिणेन वज्रं वामेन दशभूमिकपुस्तकधरः ।

पश्चिमायामवलोकितेश्वरः शुभ्रः सव्येन वरदो वामेन सरोजधरः ।

महास्थामप्राप्तः पीतः सव्येन खड्गं वामेन पद्मं दधानः ।

चन्द्रप्रभः[78a] शुभ्रः[13] सव्येन वज्रचक्रं वामेन पद्मस्थचन्द्रमण्डलं धत्ते ।

जालिनीप्रभः सितरक्तः सव्येनासिं वामेनाब्जस्थसूर्यम् ।

---

1 B नीलकी° 2 B omits °व्यग्र° 3 omits °नृत्यन्° 4 not in B 5 not in B 6 B has वामेन चि (?) कमण्डलुधरं 7 B has वामे only 8 B omits सर्व° 9 B चन्द्रवलेवित° 10 B omits °स्थ° 11 B omits वज्र° 12 B omits °दल° 13 not in B.

उत्तरस्याममितप्रभः सितः सव्येन विश्वपद्मं वामेनाब्जस्थक[1]लशं बिभ्राणः ।

प्रतिभानकूटः पीतो दक्षिणेन च्छोटिकां[2] वामेन पद्मस्थकृपाणं धत्ते ।

सर्वशोकतमोनिर्घातमतिः कुङ्कुमवर्णः सव्येन पञ्चसूचिककुलिशं वामेन शक्तिं दधानः ।

सर्वनिवरणविष्कम्भी नीलः कृपाणभृत्सव्यपाणिः वामेन विश्ववज्राङ्क[3]पताकाधरः ।

षोडशाप्येते विश्वाम्भोजचन्द्रेषु सत्त्वपर्यङ्किणो रत्नमुकुटिनो नानारत्नवस्त्रमण्डिता द्विभु[78b]जैकमुखाः ।

पूर्वद्वारे महिषे यमान्तकः कृष्णस्तुन्दिलः[4] षण्मुखः षट्चरणः[5] सव्येनाङ्कुशकृपाण-बाणान् वामैस्तर्जनीपाशं घण्टां चापं च दधानः । मुखचरणानां विशेषः पूर्ववत् ।

दक्षिणे प्रज्ञान्तकः पीतः च[6]तुर्मुखो मूलमुखं सशृ[7]ङ्गारं सव्यं सेर्ष्य[8] पश्चिमं महारौद्रं वामं शान्तम् । अथ चैतानि यथाक्रमं पीतनीलरक्तहरितानि । अष्टभुजोऽयं सव्यैः पाशवज्रखड्ग-बाणान् वामैः हृद्यङ्कुशं वज्रघण्टां शक्तिं चापं च दधानः ।

पश्चिमे पद्मान्तको रक्तश्चतुर्वक्त्रः शृङ्गाररौद्रहास्य[9]शान्तरसान्वितानि मूलसव्यपृष्ठ[10]-वाममुखानि । अथ चैतानि रक्त[79a]कृष्णपीतसितानि । [11]अष्टभुजोऽसौ सव्यैर्वज्रखड्ग-बाणान् वामैर्घण्टातर्जनीपाशचापान्वितः ।

एते त्रयो ललिताक्षेपेण स्थिताः ।

उत्तरे विघ्नान्तको नीलश्चतुर्मुखः । अथ चैतानि नीलपीतरक्तहरितानि । अष्टभुजो-ऽसौ द्वाभ्यां वज्रबन्धेन बज्रघण्टे दक्षिणैः कृपाणबाणा[12]ङ्कुशान् वामैस्तर्जनीपाशं चापं घण्टां च दधानो विनायकं प्रत्यालीढेनाक्रम्य स्थितः ।

ईशानकोणे त्रैलोक्यविजयो नीलश्च[13]तुर्मुखः मूलं सक्रोधशृङ्गारं सव्यं रौद्रं पृष्ठं वीर-रसं[14] वामं[15] बीभत्सम् । अथ चैतानि नीलपीतरक्तसितानि । अष्टभुजो द्वाभ्यां वज्रघण्टान्विता-भ्यां हृदि वज्रहूँकारमुद्रां सव्यैः खड्गाङ्कुशबाणान् वामैः कुलिशपाश[16]चापान् गृह्णन् प्रत्यालीढेन वाम[79b]पादाक्रान्तमहेश्वरमस्तको दक्षिणचरणेनावष्टब्धोमा[17]स्तनः ।

अग्नौ वज्रज्वालानलार्कः कृष्णः शृङ्गारवीरबीभत्सकरुणरसान्वित[18]चतुर्मुखः । अथ

---

1 B °न क° 2 C adds दधत् 3 B °श्वाब्ज° 4 B omits तुन्दिलः 5 not in B 6 C पीतच° 7 B शृ° 8 B °व्यान्तं 9 B omits हास्य°...°तानि 10 B omits °पृष्ठ° 11 B omits the portion form अष्ट°......क्षेपेण स्थिताः in the next paragraph 12 B omits °बाण° 13 C नीलः नीलच° 14 B वीरं 15 not in B 16 B omits °पाश° 17 B °ब्ध उमायाः 18 C adds °कृष्ण°.

चैतानि नीलपीतसित[1]रक्तानि। अष्टभुजोऽसौ सव्यैर्वज्रासिशरचक्रभृद्वामैर्घण्टां पाशं चापं खट्वाङ्गासक्तपताकां च बिभर्ति सपत्नीकं विष्णुमालीढेनाक्र[2]म्य स्थितः।

नैर्ऋत्ये हेरुकवज्रो नीलः च[3]तुर्वदनो मूलं रौद्रं सव्यं प्रमोहितं[4] पृष्ठं भक्षणोद्यतं वामं सशृङ्गारम्। अथ चैतानि नीलरक्तहरितशुक्लानि। अष्टभुजोऽयं दक्षिणैः पञ्चसू[80a]-चिकवज्रं बाणं रक्तपूर्णकपालं वामैर्हृदि कमलकलिकां धनुः सघ[5]ण्टापताकखट्वाङ्गं द्वाभ्यां महाभैरवचर्म पट[6]मिव दधानः सपत्नीकं ब्रह्माणं प्रत्यालीढेनाक्रम्य स्थितः।

वायव्ये परमाश्वः श्यामः चतुर्वक्त्रः मूलं सक्रोधशृङ्गारं सव्यं रौद्रं वामं ब्रह्ममुखम्। अथ चैतानि हरितनीलशुक्लानि मूर्ध्न्य[7]श्वमुखं हरितम्। अष्टभुजोऽसौ[8] सव्येनोत्तिष्ठाभिनयं द्वितीयेन त्रिप[9]ताकाभिनयं द्वाभ्यां खड्गबाणौ। वामेन खड्ग[10]हस्तेन विश्वाब्जं त्रिभिः शक्ति-दण्डचापान् बिभ्राणः। आलीढप्रत्यालीढाभ्यां चतुश्चरणः। दक्षिणे[11]नै[80b]केनेन्द्राणीं श्रियं च द्वितीयेन रतिं प्रीतिं च वामेनैकेनेन्द्रं मधुकरं च द्वितीयेन जयकरं वसन्तं च पदाऽवष्टभ्य [12]स्थितः।

चक्रेशस्योर्ध्वकोणे उष्णीषचक्रवर्ती पीतनीलरक्तसितचतुर्मुख[13]श्चाष्टभुजः सव्यैश्चक्रा-ङ्कुशकृपाणबाणान्[14] वामैर्घण्टापाशाक्षमाला[15]धनूंषि दधानो ललिताक्षेपेण स्थितः।

अधस्तात् सुम्भराजः कृष्णो रौद्रशान्त[16]हास्यशृङ्गाररसान्वित[17]चतुर्वक्त्रः कृष्णसित-रक्तपीतचतुर्मुखश्चाष्टभुजः सव्यैर्वज्राङ्कुशासिशरान् वामैर्घण्टापाशशूलकार्मुकानि बिभ्राणः प्रत्यालीढेन स्थितः[18]।

एते दश क्रोधाः [19]विश्वाम्भोजसूर्यस्थाः प्रतिमुखं रक्तत्रिनेत्राः कृतभ्रूभङ्गा[20] व्याघ्रचर्मा-म्बरोत्तरीयाः[21] कपालमालामुकुटा दी[81a]प्तबद्धोर्ध्वपिङ्गलके[22]शाः पिङ्गश्मश्रवोऽष्टाभिः फणी-शैर्भीषणाः।

तृतीयमण्डलस्य कोणाभ्यन्तरे त्रैलोक्यविजयादिक्रोधेभ्यश्चतुर्भ्यो बाह्यरेखाया[23] आग्ने-यादिचतुष्कोणसूत्राणां सव्यपार्श्वेषु पुष्पाद्याः वामपार्श्वेषु वज्ररूपाद्याः।

तत्र पुष्पा पीता पुष्पपुटह[24]स्ता।

धूपा कृष्णा धूपकटच्छुह[25]स्ता।

---

1 C °सितपीत° 2 B °ढाक्र° 3 C नीलच° 4 B प्रमोहमोहितं 5 B °घ° 6 C पात° 7 B °धी° 8 B °जो 9 B °प 10 B °कट° 11 B °श्चरणे° 12 B omits स्थितः...वर्त्ता in the next para 13 °चतुर्मुख° only in C 14 B omits बाणान् 15 B °सूत्र° 16 B omits °शान्त° 17 C adds °कृष्ण° 18 B °ढः 19 not in B 20 not in B 21 B °म्बराः 22 B °र्ध्वके° 23 C adds बाह्यस्थाने 24 B पीतह° 25 B °टह.°

दीपा रक्ता रत्न[1]प्रदीपयष्टिहस्ता[2]।

गन्धा श्यामा गन्धशङ्खहस्ता।

वज्ररूपा पीता दर्पणपाणिः।

[3]वज्रशब्दा श्यामा वीणाहस्ता।

वज्रेर्ष्या रक्ता गन्धभाजनभुजा।

वज्रस्पर्शा विश्ववर्णा विश्ववज्रहस्ता।

अष्टावेता द्विभुजा रत्नमुकुटिन्यो[81b] विचित्रवस्त्ररत्नमण्डिताः पद्मेन्दुषु सत्त्वपर्यङ्किण्यः।

चतुर्थे वज्रकूलमण्डले ऐन्द्रादिदिक्षु ऐरावतारूढ इन्द्रः पीतो वज्रं स्तनं[4] च दधानः।

याम्यां महिषे यमः कृष्णो यमदण्डशूलभृत्[5]।

वारुणे मकरे[6] वरुणः[7] श्वेतः सप्तफणो नागपाशशङ्खभृत्[8]।

कौवेर्य्यां नरे[9] कुबेरः सुपीतोऽङ्कुशगदाधरः।

ऐशान्यां वृषभारूढ ईशानः[10] सितः त्रिशूलकपालपाणिः जटार्धचन्द्रधरः सर्पयज्ञोपवीती नीलकण्ठः।

आग्नेय्यां छागेऽग्निः, रक्तः स्रुवकमण्डलुधरः।

नैर्ऋत्यां राक्षसाधिपो नैर्ऋतिः,[11] नीलः शवे[12] खड्गखेटकभृत्[13]।

वायव्यां मृगे[14] वायुर्नीलो वातपुटधर[15]ः।

एतेऽ[16]ष्टौ चतुर्भुजाः सव्येन प्रथमं चिन्हं वामेनाक्रोडितस्वाभपत्नी[82a]केन द्वितीयं बिभ्राणा द्वाभ्यां शिरसि कृतचक्रेशप्रणामाञ्जलयः नीलोत्पलधराः[17]।

ईशानस्य समीपे बहिरैशान्यादिदिशः प्रभृति क्रमेण ब्रह्मादयः।

तत्र हंसे ब्रह्मा पीतश्चतुर्मुख[18]श्चतुर्भुजोऽक्षसूत्राब्जभृत्स[19]व्येतराभ्यां कृताञ्जलिर्दण्डकमण्डलुधरः।

गरुडे विष्णुश्चतुर्भुजश्चक्रशङ्खभृ[20]त्सव्यवामाभ्यां मूर्ध्नि कृताञ्जलिर्गदाशार्ङ्ग[21]धरः।

---

1 B omits °रत्न° 2 C °भृत् 3 C omits a long portion from वज्रशब्दा......मण्डिताः 4 not in B 5 B °दण्डधरः 6 not in B 7 not in B 8 B °पाशः 9 not in B 10 not in B 11 not in B 12 not in B 13 B °खड्गकरः 14 not in B 15 B °तध° 16 B अ° 17 not in C 18 B omits °चतुर्मुख° 19 B °ब्जस° 20 B °खड्गम° 21 B °धनु°.

वृषभे महेश्वरः सितः शशिकनकाङ्कित[1]जटामुकुटश्चतुर्भुजः शिरसि कृताञ्जलिस्त्रि-शूलकपालभृत् ।

मयूरे कार्त्तिकेयो रक्तः षण्मुखः[2] सव्याभ्यां शक्तिं[3] वज्रं च वामाभ्यां कुक्कुटं[4] च दधानो[5] द्वाभ्यां कृताञ्जलिः ।

एतेऽपि पूर्ववदालिङ्गितस्वाभपत्नीकाः ।

ब्रह्मा[82b]णी तु ब्रह्मवत् ।

रुद्राणी रुद्रवत्[6] ।

वैष्णवी विष्णुवत्[7] ।

कौमारी कार्त्तिकेयवत्[8] ।

इन्द्राणी इन्द्रवत्[9] ।

वाराही कृष्णा पेचकारूढा[10] चतुर्भुजा सव्यवामाभ्यां रो[11]हितमत्स्यकपालधरा द्वाभ्यां कृताञ्जलिः ।

प्रेतोपरि चामुण्डा रक्ता चतुर्भुजा कर्त्रिकपालभृत्सव्येतरा कृताञ्जलि ।

भृङ्गी कृष्णः कृष्णाक्षसूत्रकमण्डलुधरः कृताञ्जलिः ।

मूषके[12] गणपतिः सितः करिवक्त्रः सर्पयज्ञोपवीती चतुर्भुजः सव्याभ्यां त्रिशूललड्डुकौ[13] वामाभ्यां परशुमू[83a]लके दधानः ।

महाकालः कृष्णस्त्रिशूलकपालभृत् ।

नन्दिकेश्वरः कृष्णो मुरजारूढो मुरजवादनपरः ।

सप्ततुरगरथे आदित्यो रक्तो दक्षिणहस्तेन वामेन च पद्मस्थ[14]सूर्यमण्डलधरः ।

हंसे चन्द्रः शुभ्रः सव्यहस्तेन वामेन च कुमुदस्थचन्द्रमण्डलभृत् ।

छागले मङ्गलो रक्तः सव्येन कट्टारं[15] वामेन मानुषमुण्डं भक्षणाभिनयेन दधानः ।

पद्मे बुधः पीतः शरधनुर्धरः ।

भेके कपाले वा बृहस्पतिर्गौरोऽक्षसूत्रकमण्डलुधरः ।

शुक्रः शुक्लः[16] कमलस्थोऽक्षसूत्रकमण्डलुभृत् ।

---

1 not in B 2 not in B 3 B omits 4 B omits 5 B omits द्वाभ्यां कृताञ्जलिः 6 not in B 7 not in B 8 not in B 9 B omits 10 B repeats रुद्राणी...°कारूढा 11 mss °लो° 12 B omits 13 B त्वेकौ (?) 14 C परम° 15 B कठोरणं 16 B omits.

कच्छपे शनैश्च[83b]रः कृष्णो दण्डधरः

राहू रक्तकृष्णः सूर्यचन्द्रभृत्सव्येतरकरः ।

केतुः कृष्णः खड्गनागपाशधरः ।

कुञ्जरे बलभद्रः सितः खड्गलाङ्गलधरः ।

कोकिलरथे जयकरश्चतुर्भुजः सव्याभ्यां पुष्पमालां बाणं च वामाभ्यां चषकधनुषी दधानः ।

शुकस्यन्दने मधुकरो गौरश्चतुर्भुजः सव्याभ्यां मकर[1]ध्वजशरे वामाभ्यां चषकचापौ बिभर्त्ति ।

प्लवङ्गे वसन्तः सितश्चतुर्भुजः सव्याभ्यां बाणकृपाणभृद्वामाभ्यां धनुश्चषकधरः ।

अनन्तवासुकितक्षककर्कोटकपद्ममहापद्म[2]शङ्ख[84a]पालकुलिकाः सप्तफणकृताञ्जलयः स्वस्वापितुः प्रधानचिन्हयुक्ताञ्जलयो वा ।

वेमचित्रिबलिप्रह्लादवैरोचनादयो महा[3]सुरेन्द्राः सन्नद्धबद्धकवचाः खड्गखेटकादिना प्रहरणव्यग्रकराः

गरुडेन्द्रः कृताञ्जलिः प्रसारितपक्षो वा यावज्जानु शुभ्रस्तदूर्ध्वं नाभिं[4] यावत्पीतस्तदूर्ध्वं कण्ठं यावद्रक्तस्तदूर्ध्वं मस्तकं यावत् कृष्णरूपः ।

किन्नरराजेन्द्रो रक्तगौरो वीणावादनपरः ।

पञ्चशिखो गन्धर्वराजेन्द्रः पीतो वीणां वादयति ।

सर्वार्थसिद्धो विद्याध[84b]रराजेन्द्रो गौरः कुसुममालाहस्तः ।

पूर्णभद्रो नीलः ।

मा[5]णिभद्रः पीतः ।

धनदो रक्तः ।

वैश्रवणः पीतः ।

चि[6]विकुण्डली रक्तः ।

केलिमाली श्यामः ।

सुखेन्द्रः पीतः ।

चलेन्द्रः पीतः ।

पूर्णभद्रादयो यक्षाधिपा बीजपूरफलनकुलभृत्सव्येतरकराः ।

---

1 C °कमल° 2 C omits °महापद्म° 3 B अ° 4 C °भी 5 B म° 6 B ची°.

हारीती पीता जडी[1]द्वयधारिणी सपुत्रा ।

अश्विनी सिता ।

भरणी हरिता ।

कृत्तिका श्यामा ।

रोहिणी रक्तगौरा[2] ।

मृगशिरा कृष्णा ।

आर्द्रा पीता ।

पुनर्वसुः पीता ।

पुष्या श्यामा ।

आश्लेषा शुक्ला ।

मघा पीता ।

पूर्वफाल्गुनी प्रियङ्गुश्यामा ।

उत्तरफा[85a]ल्गुनी हरिता ।

हस्ता सिता ।

चित्रा हरिता ।

स्वाती पीता ।

विशाखा कृष्णा ।

अनुराधा श्यामा ।

ज्येष्ठा पीता ।

[3]मूला पीता ।

पूर्वाषाढा कृष्णा ।

उत्तराषाढा पाण्डरवर्णा ।

श्रवणा सितगौरा ।

धनिष्ठा कृष्णा ।

शतभिषा पीता ।

पूर्वभाद्रपदा हरिता ।

---

1 C °ड° 2 C °क्ता 3 B omits this line.

उत्तरभाद्रपदा पीता ।

रेवती शुक्लगौरा ।

अभिजित् श्यामा ।

अश्विन्यादयो देव्यश्च रत्नकञ्चुकीपरीधानाः कृताञ्जलयः ।

अन्येऽपि देवा विमानस्था विज्ञे[1]याः ।

एताः शक्राद्या देवताः पद्मस्थाः प्रत्येकमपरिमितपरि[2]वाराश्च यथायोगं विचित्र-व[85b]स्त्ररत्नाद्यलङ्कृता भगवन्तं मण्डलेशं नमस्यन्तो जोजोत्कारमुखरि[3]तदिङ्मुखाः ।

पूर्वादिद्वारेषु वज्राङ्कुशादयो द्वारपाला यथा गर्भमण्डले ।

इह भगवान् महावैरोचनात्मा मञ्जुघोषः सुविशुद्धधर्मधातुज्ञानस्वभावः स्वाभवज्र-सत्त्वेन मुद्रितः ।

आदर्शादिज्ञानस्वभावाक्षोभ्यादितथागताश्च[4]त्वार उष्णीषा लोचना च मञ्जुघोषेण ।

वज्रसत्त्वादयश्चत्वारो मामकी वज्राङ्कुशी द्वादश भूमयो धर्मप्रतिसंवित् लास्या समन्त-भद्रादयश्चत्वारो दश क्रोधाः पुष्पा धूपा[5]पूर्वदिक्स्थितदे[86a]वताश्चाक्षोभ्येण ।

वज्ररत्नादयश्चत्वारो वज्रपाशो द्वादश पारमितार्थप्रतिसंवित् माला गगनगञ्जा-दयश्चत्वारो धूपा शब्दा दक्षिणदिग्ग[6]तदेवताश्च रत्नसम्भवेन ।

वज्रधर्मादयश्चत्वारः पाण्डरा[7] वज्रस्फोटा द्वादश व[8]शितादयो निरुक्तिप्रतिसंवित्-गीताऽवलोकितादयश्चत्वारो दीपा रसा पश्चिमदिगवस्थितदेवताश्चामिताभेन ।

वज्रकर्मादयश्चत्वारो वज्रावेशो द्वादश धारिण्यः प्रतिभानसंवित् नृत्याऽमित[9]प्रभादय-श्चत्वारो गन्धा स्पर्शोत्तरदिग्गता[10]श्चाऽमोघसिद्धिना मु[86b]द्रिताः ।

मञ्जुघोषस्य हृद्बीजं मूः । ॐ अः[11] सर्वतथागतहृदय हर हर ॐ हूँ ह्रीँः भगवन् ज्ञानमूर्त्ति वागीश्वर महावाच सर्वधर्मगगनामलसुपरिशुद्ध धर्मधातुज्ञानगर्भ आः इति हृदय-मन्त्रः । ॐ अमृतकुण्डलि विघ्नान्तक हूँ इति अमृतकुण्डलिमन्त्रः सा[12]र्वकर्मिकः ।

॥ इति धर्मधातुवागीश्वरमण्डलम् ॥

---

1 B ध्ये 2 B omits °परि° 3 C पूरि° 4 B °दयश्च 5 B रूपादि° 6 B °ग्भृ° 7 B लोचना 8 B पूर्व° 9 B °ताभ° 10 B °र्शवारादिग्रहदेवता 11 B आः 12 B स°.

# [ अथ दुर्गतिपरिशोधनमण्डलम् । ]

दुर्गतिपरिशोधनमण्डले वज्रपञ्जरस्याभ्यन्तरे वायुज्वलनजलोर्वीसुमेरूपरि कूटागारस्य मध्येऽभ्यन्तरमण्डले पीतमष्टारचक्रं नीलवज्रावली[1]वलयितम् । केचित्त्वष्टारचक्रं नीलमाहुः । [87a] अन्यस्त्वस्य[2] वेदी नीला[3] पूर्वमारं शुभ्रं दक्षिणं कृष्णं पश्चिमं रक्तं उत्तरं हरितमित्याह ।

चक्रस्य वेद्यां विश्वसरोजस्थसिंहोपरि श्रीशाक्यसिंहो भगवान् महावैरोचनः सुवर्णवर्णो धृतधर्मचक्रमुद्रः[4] ।

पूर्वारे वज्रोष्णीषः शुक्लो भूस्पर्शमुद्रः ।

दक्षिणारे रत्नोष्णीषः नीलो वरदमुद्रयान्वितः[5] ।

पश्चिमारे पद्मोष्णीषो रक्तो ध्यानमुद्रयान्वितः ।

उत्तरारे विश्वोष्णीषो हरितोऽभयप्रदः ।

आग्नेयारे[6] तेजोष्णीषः सितरक्तमिश्रवर्णः सूर्यभृद्दक्षिणपाणिः कटिस्थवामकरः ।

नैर्ऋत्यारे ध्वजोष्णीषो रक्तमि[87b]श्रकृष्णः चिन्तामणिध्वजधरः कराभ्याम् ।

वायव्यारे तीक्ष्णोष्णीषो नभःश्यामो दक्षिणपाणिना कृपाणं बिभ्राणो वामेन पुस्तकम् ।

ईशानारे छत्रोष्णीषः शुभ्रो[7] भुजाभ्यां छत्रं बिभ्राणः ।

वज्रावलीतो बहिराग्नेयादिकोणेषु लास्या माला गीता नृत्या सितपीतरक्तविश्ववर्णा द्विभुजाः ।

पट्टिषु द्वारस्य वा[8]मे द्वौ बोधिसत्त्वौ सव्ये च द्वौ ।

तत्र पूर्वस्यां पट्टिकायां मैत्रेयः पीतः सव्यकरेण नागकेसरकुसुमं वामेन कुण्डीं दधानः ।

अमोघदर्शी पीतः सनेत्राम्भोजभृद्दक्षिणकरः कटिस्थवाममुष्टिः ।

अपायञ्जहः श्वेतोऽ[88a]ङ्कु[9]शभृत्करद्वयः ।

सर्वशोकतमोनिर्घातमतिः सितपीतमिश्रवर्णः दण्डभृत्सव्यकरः कटिस्थवाममुष्टिः ।

दक्षिणस्यां गन्धहस्ती सितश्यामः सव्येन गन्धशङ्खधरः कटिस्थवाममुष्टिः ।

---

1 C °लि° 2 B °न्यस्य 3 B °ली 4 B °द्राः 5 C °द्रः 6 B °ये 7 B omits 8 B °रवा° 9 B °मङ्कु°.

सुरङ्गम: शुभ्र: सव्येनासिधर: कटिस्थवाममुष्टि: ।

गगनगञ्ज: सितपीत: सव्येन पद्मस्थधर्मगञ्जधर: कटिस्थवामहस्त: ।

ज्ञानकेतुर्नील: चिन्तामणिध्वजभृद्दक्षिणपाणि: कटिस्थवाममुष्टि: ।

पश्चिमायाममृतप्रभ: शुभ्र: मुकुटोपर्यमृतकलशभृत्सव्यकर: कटिस्थवाममुष्टि: ।

चन्द्रप्रभ: शुभ्र: सव्येन पद्मस्थचन्द्रबिम्बं बिभ्रा[88 b]ण: कटिस्थ[1]वाममुष्टि: ।

भद्रपाल: शुभ्र:[2] सव्येन सज्वाल[3]रत्नधारी कटिस्थवाममुष्टि: ।

जालिनीप्रभो रक्त: सव्येन वज्रपञ्जरं बिभ्राण: कटिस्थवाममुष्टि: ।

उत्तरस्यां वज्रगर्भो नीलसित: सव्येन नीलोत्पलधर: कटिन्यस्तवाममुष्टि: ।

अक्षयमति: सितो हस्ताभ्यां ज्ञानामृतकलशधारी ।

प्रतिभानकूटो रक्त: सव्येनाब्जस्थ[4]रत्नमुकुटधारी कटिस्थवाममुष्टि: ।

समन्तभद्र: सुवर्णवर्णो रत्नमञ्जरीभृद्दक्षिणपाणि: कटिस्थवाममुष्टि: ।

मण्डलस्याग्न्यादिषु पुष्पा धूपा दीपा गन्धा सितरक्तकृष्ण[89a]हरिता: पुष्पादि-भृद्भुजद्वया: ।

पूर्वद्वारे वज्राङ्कुश: सितो हस्तद्वयेनाङ्कुशधर:

दक्षिणे वज्रपाशो नीलो भुजाभ्यां पाशभृत् ।

पश्चिमे वज्रस्फोटो रक्त: कराभ्यां वज्रशृङ्खलाधर: ।

उत्तरे वज्रावेशो हरितो हस्ताभ्यां वज्रघण्टाधर: ।

एता: सप्तत्रिंशदपि देवता विचित्रवस्त्ररत्ननेपथ्या[5] रत्नमुकुटिन्यो द्विनेत्रा द्विभुजा विश्वाम्भोजचन्द्रेषु सत्त्वपर्यङ्केण निषण्णा: ।

इह महावैरोचन: स्वाभवैरोचनेन [6]मुद्रित: ।

महावैरोचनेन वज्रोष्णीषादयश्चत्वार: ।

वज्रोष्णीषेण पूर्वदिगग्निकोणस्था देवता: ।

रत्नोष्णीषेण दक्षिण[7]दि[89 b]ङ्नैर्ऋतिकोणस्था: ।

पद्मोष्णीषेण पश्चिमदिग्वायव्यकोणस्था: ।

विश्वोष्णीषेणोत्तरदिगीशानकोणस्था: ।

---

1 B °न्यस्त 2 B °क्र: 3 C °ज्वाला° 4 C omits from रत्न°......सुवर्णवर्णो 5 B omits °रत्ननेपथ्या 6 C omits मुद्रित:......नेन in the next line. 7 B omits दक्षिण°.

इह बाह्यकोणस्थमण्डलस्य देवतास्थाने पट्टिकायामष्टाविंशतिचन्द्रमण्डलानि [1]पश्यति। तन्त्रान्तरादिषु षोडशबोधिसत्त्वन्यासो न सङ्गतः। केचिदभ्यन्तरमण्डलमिति तन्त्रवचनाद्बाह्यकूटागारस्याभ्यन्तरे द्वितीयकूटागारमाहुः।

कश्चित्तु महावैरोचनादयो नव तथागताः सोष्णीषा भिक्षुवेशधारिण इत्याह।

पद्मावलीपरिकरितचक्रवाटस्याभ्यन्तरे ऐशानदिशमारभ्य दक्षिणावर्त्तेन नीलकण्ठादिन्यासः।

तत्रैशान्यां वृषभे नीलकण्ठः शुक्लो यज्ञोपवीती सव्ययोर्वज्रं वरदमुद्रां च वामयोस्त्रिशूलं खड्गं च।

गरुडे[90a] विष्णुः कृष्णः सव्ययोर्गदापद्मे[2] वामयोः शङ्खचक्रे।

वज्रहेमा विष्णुरिव सुवर्णवर्णा इति विशेषः।

मयूरे वज्रघण्टः षण्मुखो रक्तः सव्ययोः शक्तिवज्रे वामयोः कुक्कुटी वज्रघण्टा च।

कौ[3]मारी वज्रघण्टवत्।

हंसे मौन[4]वज्रः पीतश्चतुर्मुखः सव्ययोर्वज्राक्षसूत्रे वामयोर्दण्डकमण्डलुधरः।

वज्रशान्तिर्ब्रह्मवत्।

श्वेत[5]षड्दन्तदन्तीन्द्रे व[6]ज्रायुधः पीतो ललितासनः सव्यकरेण वज्रं दधानः कटिन्यस्तवामहस्तेन वज्रम्।

वज्रमुष्टिर्देवी वज्रायुधवत्।

सप्ताश्वरथे वज्रकुण्डलीक्रोधो रक्तः सव्यकरेण पद्मं[90b] वामे पद्मस्थ[7]सूर्यमण्डलम्।

वज्रामृता वज्रकुण्डलीवत्।

हंसे वज्रप्रभक्रोधः सितः सव्यहस्ते वज्रं वामे पद्मस्थचन्द्रः।

वज्रकान्तिर्वज्रप्रभवत्।

[8]छागले वज्रपिङ्गलक्रोधो रक्तः सव्यभुजे वज्रं वामेन मानुषमादाय भक्षयति।

वज्रमेखला वज्रपिङ्गलवत्।

पद्मे वज्रसौम्यक्रोधः पीतः[9] शरधनुर्धरः।

वज्रसौम्या[10] वज्रसौम्यवत्।

---

1 B omits a long portion from पश्यति......°स्याभ्यन्तरे 2 C °वज्रे
3 B कु° 4 B °र° 5 C omits श्वेत° 6 C चन्द्रव° 7 C omits सूर्य°...पद्मस्थ°
8 C adds ईशाने before this. 9 B omits 10 B °म्यो.

भेके वज्रगुरुक्रोधो गौरोऽक्षसूत्रकमण्डलुधरः।

गुरुवज्रा वज्र[1]गुरुरिव।

पद्मे वज्रशुक्रक्रोधः[2] शुक्लोऽक्षसूत्रकमण्डलुभृत्।

शुक्रवज्रा वज्रशुक्रवत्।

कच्छपे वज्रदण्ड[3]क्रोधः सव्ये वज्रं वामे दण्डः।

दण्डवज्राग्री वज्रदण्डवत् [91 a]।

वज्रराहुक्रोधो रक्तकृष्णः चन्द्रसूर्यमण्डलभृत्सव्येतरकरः।

वज्रासुरी वज्रराहुरिव।

वज्रकेतुक्रोधः कृष्णः खड्गनागपाशधरः।

वज्रनागी वज्र[4]केतुवत्।

एतच्चतुष्टयं वज्रसौम्यादिषट्कं च तन्त्रान्तरोक्तं लिखितम्।

कुञ्जरे वज्रशौण्डः सितः सव्ये वज्रं वामेन लाङ्गलम्।

वज्रविनया वज्रशौण्डवत्। वामेन खट्वाङ्गं बिभर्तीति विशेषः।

कोकिलरथे वज्रमालः श्यामः सव्ये वज्रं वामे कुसुममाला।

वज्रासना वज्रमालवत्। शक्तिभृद्वामभुजेति विशेषः।

शुक्[5]रथे वज्रवंशो[6] गौरः सव्ये [91 b] वज्रं वामे मकरध्वजम्।

वज्रवंशा [7]वज्रवंशवत् रक्तवर्णेति विशेषः।

मण्डुके विजयवज्रः सितो वज्रखड्गधरः।

वज्रसेना[8] विजयवज्रवत्।

पुष्पविमाने वज्रमुसलो गौरो वज्रमुसलभृत्सव्येतरकरः।

वज्रदूती वज्रमुसलवत् वामेन खट्वाङ्गधारिणीति विशेषः।

छागले वज्रानलो रक्तः सव्याभ्यां वज्रं[9] कवचं[10] च वामाभ्यां दण्डं कमण्डलुं च धत्ते।

वज्रज्वाला वज्रानलवत्।

महिषे वज्रकालः कालवज्रमङ्कुशं च धत्ते।

---

1 B omits वज्र° 2 B omits °शुक्रः क्रोधः 3 B omits क्रोधः 4 B चक्र° 5 B °क° 6 C वज्रावेशी 7 B omits 8 C वज्रासना 9 B °ज्रांक° 10 B °केवलं.

वेताले[1] वज्रकाली कृष्णा वज्रं खट्वाङ्गं च बिभ्राणा ।

शेषनागे वज्राङ्कुशो नीलो वराहवक्त्रो[92a] वज्रमङ्कुशं च दधानः ।

पुरुषे वज्र[2]मुखी नीला वराहमुखी वज्रखड्गधरा ।

मकरे नागवज्रः सितोऽष्टफणः सव्ये वज्रं वामे नागपाशः ।

मकरे वज्रमकरा सिताष्टफणा सव्ये वज्रं वामे वज्राङ्कमकरः ।

मृगे वज्रानिलो[3] नीलः सव्ये वज्रं वामे वातपुटः[4] ।

वेगवज्रिणी वज्रानिलवत् ।

वेताले वज्रभैरवो नीलो वज्रगदाधरः ।

वज्रविकटा वज्रभैरववत् । वामेन पाशधारिणीति विशेषः ।

मूषके वज्रविनायकः सितो गजमुखः सव्याभ्यां वज्रपरशुभृत् वामाभ्यां त्रिशूलदण्डधरः सर्पय[92 b]ज्ञोपवीती ।

मूष[5]के पूतना[6] नीला सलोमा[7] सव्ये वज्रं वामे सम्मार्जनी ।

भीमा श्यामा सव्येन वज्रं वामेन खड्गखे[8]टकधरा ।

श्रीर्गौरवर्णा सव्येन वज्रं वामेन पद्मम् ।

सरस्वती सिता सव्येन[9] वज्रं वामेन[10] वीणाम् ।

सिंहदुर्गा श्यामा सव्ययोर्वज्रचक्रे वामयोः पट्टिशं[11] शङ्खं च ।

अत्र नीलकण्ठादिदेवतानां दक्षिणकरेषु यथासम्भवं वज्राणि त्रिसूचिकानि वेदितव्यानि ।

पश्चिमे नागवज्रसमीपे पद्मे पृथ्वी सुवर्णवर्णा हस्ताभ्याममृतकलशधरा ।

असुराश्च नानावर्णाः सकवचा[12]: खड्गधराः सम्भूतमृद्वासना नागाश्च सम[93a]णिफणाः सभार्याः साञ्जलयः ।

चक्रवाटस्य बाह्ये आग्नेय्यां दिशि अविद्यादिना रक्ताः नैर्ऋत्यां प्रेतगतिस्थाः वायव्यां तिर्यञ्चः ऐशान्यां मानुष[13]गतिस्थाः । अयं क्रमस्तन्त्रान्तरन्यायेन लिखितः ।

अन्यस्तु वज्रभैरवस्य समीपे पृथ्वी यक्षाश्च[14] वज्रकालस्य समीपेऽसुराः इत्यादि कर्मादिषु[15] ।

---

1 B °डे 2 B °त्र 3 B °नीला 4 B °पत्रः 5 C °षि° 6 C पूता 7 not in B 8 B °खे° 9 C °व्ये 10 C °मे 11 B वश्रं 12 B °कचाः 13 B मनुष्य° 14 B °त्र 15 B दिवष्टे (?).

मण्डलेशस्य हृदि चन्द्रे ओँ। ओँ मुने मुने महामुनये स्वाहेति मन्त्रः। हृदयमन्त्रश्चायम्। ओँ नमो भगवते सर्वदुर्गतिपरिशोधनराजाय तथागतायार्हते[1] सम्यक्सम्बुद्धाय। तद्यथा ओँ शोधने शोधने विशोधने[2] विशोधने[3] सर्वपापविशोधने[93b] शुद्धे विशुद्धे[4] सर्वकर्मावरणविशुद्धे स्वाहेति मालामन्त्रः। [5]वज्रावेशस्य तु ओँ सर्ववित् सर्वापायगतिगहनविशोधने[6] हूँ हो:[7] फडिति मन्त्रः सार्वकर्मिकः। ओँ वज्रयक्ष हूँ इत्यन्ये[8]।

॥ इति दुर्गतिपरिशोधनमण्डलम् ॥

---

1 B °न्ते 2 C omits 3 C omits 4 C °द्ध° 5 C omits 6 B °ने 7 B हा: 8 B °नेन.

# [ अथ भूतडामरमण्डलम् । ]

भूतडामरमण्डले वज्रपञ्जरस्याभ्यन्तरे[1] सुमेरूपरि विश्वपङ्कजकर्णिकास्थितविश्वकुलिशवेद्युपरि कूटागारस्य नाभौ गजराजोपरि गजरहिते वा विश्वसरोजचन्द्रेऽपराजितं महाभूतं सितवर्णमर्द्धचन्द्राङ्ककपिलजटामुकुटश्मश्रुकं पञ्चकपालिनं त्रिनेत्रं दंष्ट्राकरालिनं[2] तुन्दिलं व्याडयज्ञोपवीतिनं व्याघ्रचर्मा[ 94 a ]म्बरधरं[3] चतुर्भुजं सव्याभ्यां कर्त्रिडमरुधरं कपालत्रिशूलभृद्वामद्वयं रौद्रं प्रत्यालीढेनाक्रान्तो भूतडामरो महारौद्रो नीलः पञ्चकपालालङ्कृतमुकुटी[4] पञ्चतथागतमुकुटी पिङ्गो[5]र्ध्वबद्धकेशो नीलवस्त्रावृततनुः दंष्ट्राकरालवक्त्रो रक्तनेत्रत्रयः साट्टहासश्चतुर्भुजो दक्षिणेन नीलकरालवज्रमुल्लालयन्वामेन सपाशतर्जनीधरो द्वाभ्यामाबद्धमुद्रः । मुद्रा तु—

अनामिकाद्वयं वेष्ट्याकुञ्चयेत्तर्जनीद्वयम् ।
कनिष्ठां मध्यमां चैव ज्येष्ठाङ्गुष्ठेन चाक्रमेत् ॥

इत्यनेनोक्ता ।

अष्टभिर्भुजग[6]राजैर्विराजितः । तत्र शिरोवेष्ट[94b]नं ग्रीवाभरणं तक्षको रक्तः, नन्दोपनन्दौ कर्णकुण्डले[7] पीतावेकत्वेन गणनीयौ, ब्रह्मसूत्रमनन्तः सितः, कटिसूत्रं वासुकिः शुक्लः, मुद्राभुजयोः केयूरः कुलिकः पारावतवर्णोऽपरभुजयोः केयूरः शङ्खपालो धवलः, नूपुरौ पद्ममहापद्मौ रक्तावेक एव ।

पूर्वकोष्ठे वृषभसूर्ये महेश्वरः ऊर्ध्वलिङ्गः कपाली भस्मवर्णः त्र्यक्षोऽर्धचन्द्राङ्कजटाविटपी व्याडयज्ञोपवीती चतुर्भुजः सव्याभ्यां कर्त्रिडमरू वामाभ्यां कपालत्रिशूले दधानः ।

दक्षिणे गरुडसूर्ये विष्णुः कृष्णो रत्न[8]मुकुटी सव्याभ्यां कमलखड्गभृत् वामाभ्यां चक्रगदाधरः[9][ 95a ] ।

पश्चिमे हंसचन्द्रे ब्रह्मा सितः चतुर्मुखः सव्याभ्यामक्षमालाच्छत्रदण्डभृत् वामाभ्यां पद्मकमण्डलुधरः ।

उत्तरे मयूरसूर्ये कार्त्तिकेयो रक्तस्त्रिचीरः सव्येन चामरं वामेन शक्तिं बिभर्त्ति ।

ऐ[10]शाने मूषि[11]कचन्द्रे गणपतिः सितो गजास्यस्त्रिनेत्रोऽर्धचन्द्रशेखरश्चतुर्भुज[12]: सव्याभ्यां मूलकपरशू वामाभ्यां त्रिशूलकपाले बिभर्त्ति ।

---

1 C °रमध्ये 2 omitted in B 3 B °म्ब'र 4 C °टः 5 B °ङ्गलो° 6 B °ङ्ग° 7 B °लौ 8 B °क्त° 9 C दधानः 10 B ई° 11 B मूख° 12 B सशरः.

आग्नेये सूर्यमण्डले आदित्यो रक्तः सव्येन वामेन[1] च सरोजस्थसूर्यमण्डलभृत् ।

नैर्ऋत्ये रथस्थसूर्यचन्द्रे राहू रक्तकृष्णोज्वलपिङ्गोर्ध्वकेशो[2] ज्वलत्पिङ्गलचक्षुर्भ्रूश्मश्रुश्वतुर्दंष्ट्राविदारितास्यः कराभ्यां कृतचन्द्रसूर्ययुक्ताञ्जलिः [95b] ।

वायव्ये चन्द्रे नन्दी पीतो नृत्यन्नर्धच[3]न्द्रशे[4]खरो व्याडयज्ञोपवीती सव्येतराभ्यां डमरुत्रिशूलभृत् ।

द्वितीयपुटे पूर्वस्यां दिशि चन्द्रे श्रीः शुक्ला हृद्यञ्जलिना पद्मपुष्पभृत् ।

दक्षिणस्यां चन्द्रे तिलोत्तमा रक्ता धूपकटच्छुं धृत्वा नृत्यन्ती ।

पश्चिमायां चन्द्रे शशी रक्ता दीपहस्ता ।

उत्तरस्यां चन्द्रे उमा पीता मूर्ध्नि भोगाकारेण कृतविपरीतहस्ता नृत्यन्ती ।

आग्नेय्यां चन्द्रे रत्नश्री[5] रक्ता गन्धहस्ता ।

नैर्ऋत्यां चन्द्रे सरस्वती वीणां वादयन्ती ।

वायव्यां चन्द्रे सुर[6]सुन्दरी कृष्णा रत्नमालाधारिणी ।

ऐशान्यामिन्दौ [7]विभूतिः पीता नृ[96a]त्यत्रिसूचिकवज्राङ्ककरकिसलया ।

तृतीयपुटे पूर्वस्यां सितैरावतचन्द्रे शक्रः पीतो रत्नमुकुटी सव्येनाभयदो वामेन वज्रायुधः ।

दक्षिणस्यां महिषसूर्ये यमः कृष्णस्तुन्दिलः कपिलाक्ष[8]भ्रूश्मश्रुजटः पीतवस्त्रः सव्येन कपालाङ्कितदण्डभृत् वामेन सतर्जनीपाशधरः[9] ।

पश्चिमायां भुजगचन्द्रे वरुणः सितः सप्तफणो वामेन नागपाशभृत् सव्येन वरदः ।

उत्तरस्यां यक्षारूढः कुबेरः पीतः पीनो[10] लम्बोदरः [11]रत्नमुकुटी सव्यवामाभ्यां गदानकुलीधरः ।

आग्नेय्यां च्छागलसूर्ये अग्निः रक्तस्त्रिजटो ज्वलत्पिङ्गलकेशश्मश्रुर्लम्बोदरस्त्रिपुण्ड्रो यज्ञोपवीती सव्या[96b]भ्यां वरदाक्षसूत्रधरो वामाभ्यां त्रि[12]दण्डकमण्डलुभृत् ।

नैर्ऋत्यां वेताड[13]सूर्ये नैर्ऋतिः कृष्णः सव्येन खड्गं वामेन मांसपूर्णकपालं दधानः कपिलस्फारिभ्रू[14]श्मश्रुः ।

वायव्यां मृगेन्दौ वातो नीलस्त्रिचीरः कराभ्यां वातपुटभृत् ।

---

1 B omits 2 B omits 3 B °धीर्ध° 4 B शि° 5 B omits 6 B omits सुर° 7 C omits विभूतिः......दक्षिणस्यां in the third para 8 B °लः 9 B °भृत 10 B omits 11 C omits रत्न°......लम्बोदरः 12 B मृत्रि° 13 B °ल° 14 B °हरि°.

ऐशान्यां हंसचन्द्रे[1] चन्द्रः शुभ्रो वामेन कुमुदस्थचन्द्रमण्डलं सव्येन वरदः। ईशानश्च महेश्वरवत्।

चतुर्थपुटे[2] पूर्वस्यां विधौ सिंहध्वजधारिणी सिता सिंहध्वजभृत्।

दक्षिणस्यामिन्दौ विभूती रक्ताङ्कुशधारिणी।

पश्चिमायामिन्दौ[3] पद्मवती सिता धनुर्बाणहस्ता।

उत्तरस्यां शशिनि सुरहारिणी र[97a]क्ता चिन्तामणिध्वजभृत्।

ऐशान्यामिन्दौ वरहारिणी पीता हृदि कृतसपु[4]ष्पसम्पुटाञ्जलिः।

आग्नेय्यां शशभृति रत्नेश्वरी पीता धूपकटच्छूहस्ता।

नैर्ऋत्यामिन्दौ भूषणा[5] पीता गन्धशङ्खहस्ता।

वायव्यां चन्द्रे जगत्पालिनी पीता दीपयष्टिहस्ता।

अत्र सर्वे रवीन्दवो विश्वपद्मस्थाः सर्वा देवताः सत्त्वपर्यङ्किण्यो विचित्रवस्त्ररत्नालंकृताः। आसां न विशेषवचनम्।

अत्र चक्रेशस्य कुलेशोऽक्षोभ्यः। भगवतो हृद्बीजं हूँ। हूँ वज्रफडिति[6] हृदयम्। ओँ भूतडामर भूताधिपति अक्षोभ्यकिरीटिन् सर्वभूत[97b]प्रेतपिशाचान् साधय हूँ फडिति वा। अयमेव मन्त्रोऽस्य सार्वकर्मिकः विघ्नान्तकमन्त्रो वा।

॥ इति भूतडामरमण्डलम् ॥

---

1 B omits °चन्द्रे 2 B omits °पुटे 3 B महा° 4 B °तपु° 5 B °णी 6 B adds तु.

## [ अथ पञ्चडाकमण्डलम् । ]

पञ्चडाकमण्डले वज्रभूम्यादिकं कूटागारपर्यन्तं प्रथममञ्जुवज्रमण्डल[1] इव। तत्र कूटागारस्य म[3]ध्ये भगवान् वज्रडाकः । पूर्वादिद्वारेषु गौर्यादयः । ऐशानादिकोणेषु पुक्कस्यादयः।

तत्र गौरी सिता सव्येनाङ्कुशधारिणी।

चौरी पीता पाशधरा।

वेताली रक्ता भुजाभ्यां स्फोटभृत्।

घस्मरी हरिता वज्रघण्टाधरा[3]।

पुक्कसी नीला बोधिचित्तघटहस्ता।

शबरी सिता मेरुधरा।

चण्डाली नीला वह्निकुण्डभृत् [98a]।

डोम्बी विश्ववर्णा महाध्वजपताकां धत्ते।

पूर्वकूटागारस्य मध्यचन्द्रे बुद्धडाकः शुक्लास्यः मूल[4]मुखं शुक्लं वामं रक्तं शेषास्यानि नीलानि। दक्षिणाष्ट[5]कपालेषु मयूरमहिषनक्रमीनगजकूर्मशेषनागहंसाः। वामाष्टकपालेषु गोधा ज्येष्ठी हलाहलाञ्जनाभौ मूषकः चमरी ग[6]न्धी वातकश्च।

पूर्वादिद्वारेषु ऐशानादिकोणेषु च यथाक्रमं देव्यः।

तत्र सन्दं[7]शा नीला सन्दं[8]शहस्ता।

पाशिनी पीता पाशभृत्।

वागुरा रक्ता वागुरजालधारिणी।

[ अङ्कुशी ] हरिता[9] अङ्कुशहस्ता[10]

पुष्पा शुक्ला पुष्पकरण्डधरा[11]।

धूपा कृष्णा धूपकटच्छूहस्ता।

दी[98b]पा पीता[12] दीपयष्टिभृत्।

गन्धा पीता गन्धपूर्णशङ्खहस्ता।

---

1 B °ले 2 B °रम° 3 B °ण्टा° 4 B omits मूल° 5 B °णे° 6 B गा° 7 B °दं° 8 B °दं° 9 B omits 10 B °धारिणी 11 B °हस्ता 12 B omits.

दक्षिणमण्डलस्य मध्ये रत्नडाकः पीतास्यो मूलवाममुखे पीतसिते। शेषास्यानि नीलानि। सव्यकपालेषु कारण्डवचक्रवाकैडकचकोरश्येनपाणजिचिल्लकुरराः वामेषु कर्कोटक-शङ्खपालकुलिकपद्मतक्षकवासुक्यनन्ताः।

पूर्वादिद्वारेष्वैशानादिषु च देव्यः।

तत्र सूर्यहस्ता सिता सूर्यमण्डलधरा[1]।

दीपा नीला दीपयष्टिभृत्।

रत्नोल्का[2] पीता[3] रत्नधरा।

तडित्करा हरिता विद्युल्लताधारिणी।

लास्या रक्ता सगर्वं सवज्रलास्याभिनयोभयभुजा[4] [99a]।

माला रक्ता कराभ्यां रत्नमालाभृत्।

गीता रक्तसिता भुजा[5]भ्यां कंसिके वादयन्ती।

नृत्या विश्ववर्णा सवज्रभुजाभ्यां नृत्यन्ती।

पश्चिममण्डलस्य मध्ये पद्मडाको रक्तास्यो मूलवाममुखे रक्तसिते शेषमुखानि नीलानि। सव्यकपालेषु भल्लुकगृध्रगण्ड[6]गवयव्याघ्रमर्कटनक्रशृगालाः। वामेषु काकोलूकबकसिंहसारसच्छागमृगशूकराः।

प्रागादिद्वारेषु ऐशान्यादिषु च देव्यः।

तत्र पद्मा शुक्ला पद्महस्ता।

धर्मोदया पीता धर्मोदयधरा।

स्फोटा कृष्णा [7]भुजाभ्यां स्फोटभृत्।

स्वा[99b]श्लेषा हरिता बुद्धानुरागानुबन्धेन स्वाश्लेषणपरसवज्राब्जभाजनभुजयुग्मा[8]।

वंशा रक्ता कराभ्यां धृतवंशं वादयन्ती।

वीणा पीता वीणावादनपरकरद्वया।

मुकुन्दा[9] सिता कराभ्यां मुकुन्दं[10] वादयन्ती।

मुरजा धूम्रवर्णा[11] मुरजवादनपरभुजद्वया[12]।

---

1 C °भृत् 2 B omits 3 B omits 4 B reads differently as लास्याभिनया सवज्रकरद्वया। 5 B करा° 6 B °गुंशा° 7 B करास्फोटभृत् 8 B °करद्वया 9 B °ण्डा 10 B °ण्डं 11 B °म्रा 12 B °परा.

उत्तरे कूटागारस्य मध्ये विश्व[1]डाकः श्यामास्यो मूलमश्वमुखमपराणि[2] दिव्य[3]-मुखानि । मूलमुखमपि दिव्यमिति पक्षान्तरम् । वामे सितं शेषाणि नीलानि । सव्यकपालेषु बुधबृहस्पतिकेतुराहुमङ्गलशुक्रशनै[4]श्चरविष्णवः[ 100a ] । वामेष्विन्द्रब्रह्मरुद्रकामदेवबलभद्रक्षपणकवेमचित्रि[5]बलयः ।

पूर्वादिद्वारेष्वैशानादिषु च देवताः ।

तत्र तालिका[6] सिता तालिकाहस्ता[7] ।

कुञ्ची पीता कुञ्चिकाहस्ता ।

कपाटा[8] रक्ता कपाट[9]धरा ।

पटधारिणी कृष्णा कराभ्यां काण्डपटं बिभ्रती ।

लोचना सिता चक्रधरा ।

मामकी नीला वज्रहस्ता ।

पाण्डरा रक्ता पद्मपाणिः ।

तारा हरिता नीलोत्पलधारिणी ।

महाकूटागारस्य द्वारेष्वैशानादिषु च गौर्यादयः पुक्क[10]स्यादयश्च पूर्ववत्[11] ।

इह वज्रडाकः आसन[12]वर्णसंस्थानवक्त्रभु[ 100b ]जादिभिर्नैरात्मकहेरुकमण्डले यथा षोडशभुजहेवज्रालिङ्गितो नैरात्माऽपि तथा । अत्र चक्रादिडाकास्तु चत्वार उक्तविशेषै[13]-र्वज्रडाकसमा आलिङ्गितदेव्यस्तेषां यथाक्रमं लोचनामामकीपाण्डरातारा: सितपीतरक्तहरिताः कर्त्रितर्जनीयुक्तभुजद्वयाः । पञ्चापि डाकाः प्रत्येकं पञ्चबुद्धमुकुटाः[14] ।

सर्वेषु च कूटागारेषु देव्यो नग्ना रक्तवर्त्तुलत्रिनेत्रा दंष्ट्राकरालैकवक्त्रा द्विभुजा ज्वलदूर्ध्वकपिलकुन्तला ललाटस्थपञ्चकपाला गलावलम्बिशुष्कनृमुण्डमालाः[ 101a ]पञ्चमुद्राविभूषिताः विश्वपद्मसूर्येषु प्रत्यालीढेन नृत्यन्तो विशेषवचने हृदि वाममुष्टितर्जन्या तर्जयन्त्यः ।

आलिङ्गितदेवीनां तु न[15] पृथगासनम् । गौर्याद्यष्टानां यथाक्रमं ब्रह्मेन्द्रोपेन्द्ररुद्र[16]यमवरुणकुबेरनैर्ऋतिवेमचित्रिणः शवस्थानेष्विति पक्षान्तरम्[17] ।

डाका गौर्यादयश्च वज्रडाकाभिमुखाः । अन्या देव्यः स्वस्वाधिपत्याभिमुखाः ।

हेवज्रस्य मूर्ध्नि वज्रभृद्वज्रं च । द्वारकोणदेवीनां तु चिन्हं शाश्वतरत्नेशामिताभाः ।

---

1 C omits °डाकः......मश्व° 2 C °रं 3 C °व्यं 4 C °नि° 5 C °त्र° 6 B तत्रालिकालि 7 C °धरा 8 B °पिता 9 B °ल° 10 B °ष्क° 11 B प्रागवत् 12 B °नेन 13 B has °शेषेभ्योऽन्यैर्विशेषै° 14 B °टीः 15 B omits 16 B omits °रुद्र° 17 C °रे.

शाश्वतस्य चक्रधरश्चक्रं[1] च । द्वारकोणदेवीनां चिन्हं रत्नामि[101b]ताभामोघसिद्धयः ।

वज्रसूर्यस्य रत्न[2]पाणिश्चिंतामणिश्च । द्वारकोणदेवीनां कायचित्तामिताभामोघसिद्धयः ।

पद्मनर्त्तेश्वरस्य पद्मधरो वज्रपद्मं च । द्वारकोणदेवीनां कायरत्नाक्षोभ्यामितायुषः ।

परमा[3]श्वस्य खड्गधरः खड्गश्च । द्वारकोणदेवीनां कायचित्तामिताभामोघसिद्धयः ।

बाह्यगौर्यादीनां पूर्ववत् ।

वज्रादिडाकानां यथाक्रमं हृद्बीजानि हूँ ओँ त्राँ आँ खँ । [हृदयमन्त्रास्तु]—ओँ धर धर धारय धारय मर्द मर्द वज्रधृक् फट् स्वाहा ।

ओँ शाश्वत परमशाश्वत एह्येहि जिनजिक् हूँ फट् स्वा[102a]हा ।

ओँ वज्रसूर्य तमोविधमन समय[4]स्त्वमहं रत्नधृक् हूँ फट् स्वाहा ।

[5]ओँ वज्रधर्म समयस्त्वं हुलु हुलु आरोलिक् हूँ फट् स्वाहा ।

ओँ फू फू हि हि प्रज्ञाधृक् फट् स्वाहा इति ।

नमः समन्तबुद्धेभ्यो नमो वज्रमहाक्रो[6]धाय महादंष्ट्रोत्कटभैरवाय वज्रसन्दोहदर्पाय अमृतकुण्डलि[7] हूँ इति विघ्नान्तकस्य मन्त्रः सार्वकर्मिकः ।

एषां पञ्चडाकानामन्यतमस्य[8] मण्डलमध्यभावे तु[9] प्रत्येकं पृथङ्मण्डलम् । तदुक्तं भगवता—

यस्यैव बुद्धनाथस्य मध्ये भवति मण्डलम् ।
तस्यैव मण्डलं प्रोक्तं मण्डलस्या[10]परिग्रहात् ।
ए[102b]कैकं मण्डलं भाव्यमथवा सर्वमण्डलम् ॥ इति ।

॥ इति पञ्चडाकमण्डलम् ॥

---

1 B °धरं च चक्रं 2 C रत्न रत्न° 3 B पद्मा° 4 B म° 5 C omits this mantra 6 B °ज्रक्रो° 7 C °ली 8 C °नमन्यस्य 9 B मध्ये भाव्यते 10 B °सार°.

## [ अथ षट्चक्रवर्तिमण्डलम् । ]

षट्चक्रवर्तिमण्डले वज्रभूम्यादिदशारचक्रपर्यन्तं[1] यथा मञ्जुवज्रस्य मण्डले । दशारचक्रे दशक्रोधाः परं त्रैलोक्यविजयक्रोधमण्डलोक्ता वज्रदण्डादयो वज्रपातालपर्यन्ता एवं विशेषाः । अस्य दशारचक्रस्य नाभ्यन्तर्धर्मोदया मध्येऽनिलानलजलहेममहीमण्डलसुमेरूपरि विश्वाम्भोजनाभौ महाकूटागारम् । धर्मोदयाऽत्र ना[2]स्तीति पक्षान्तरम् ।

महाकूटागारनाभिस्थकूटागारमध्ये सि[3]तसिंहोपरि विश्वसरोरुहस्थसूर्यमण्डलमध्यस्थं वज्रसत्त्वं विभावयेदित्यभिधानोत्तरोक्तत्वात्सूर्यस्थभैरवगौर्यावुपरि वज्रपर्यङ्कनिषण्णो[ 103a ] ज्ञानडाको वज्रसत्त्वः श्वेतः कृष्णो वा वज्रवज्र[4]घण्टासव्येतरकराक्रोडितदेवीकः । सा तु सवज्रतर्जनीकोद्य[5]तसव्यकरा रज[6]:पूर्णकपालभृदालिङ्गितवामभुजा रक्तवर्णा ज्ञानडाकिनी वज्र[7]धात्वीश्वरीति वज्रवाराहीति वाऽपरनामधेया ।

अत्र पूर्वादिषु दक्षिणावर्तेन बुद्धडाकिन्यादीनां पञ्चानां न्यासः । तत्प[8]रिवाराणान्तु प्रतिमण्डलं पूर्वादिद्वारेषु वामावर्तेनाग्न्यादिविदिक्षु दक्षिणावर्तेन ।

वज्रसत्त्वस्य दिक्षु यथाक्रमं डाकिनीलामाखण्डरोहारूपिण्यो[9] नीलपीतरक्तहरिता आ[ 103b ]लीढस्थाः ।

द्वारेषु खण्डकपाल[10]महाकङ्कालविकटदंष्ट्रिणः सवज्रवज्रघण्टा हस्ताभ्यां प्रचण्डाचण्डाक्षीप्रभावतीमहानासाः भस्म[11]शुभ्रवर्णाऽऽलिङ्गिताः ।

ततो वैरोचनकूटागारस्य मध्ये[12] सिंहोपरि विश्वाब्जचन्द्रस्थब्रह्मणो हृदि वज्रपर्यङ्की बुद्धडाकः शुभ्रश्चक्रचक्राङ्कघण्टाभृत्स[13]व्यवामभुजालिङ्गितसितबुद्धडाकिनीकः ।

द्वारेषु सुरावैर्यमिताभवज्रप्रभवज्रदेहाः श्वेताश्चक्रचक्रघण्टाभृद्भुजाभ्यां वीरमतीखर्वरीलङ्केश्वरीद्रुमच्छायाः पीताऽऽलिङ्गन्त्यः ।

रत्नेशकूटागारस्य म[ 104a ]ध्ये तुरगोपरि विश्वाब्जसूर्यस्थादित्यहृदि वज्रपर्यङ्की रत्नडाकः पीतः सव्यवामभुजाभ्यां रत्नरत्नाङ्कघण्टाभ्यामालिङ्गितरत्नडाकिनीकः ।

द्वारेषु अङ्कुरिकवज्रजटिलमहावीरवज्रहूँकाराः पीताः सरत्न[14][ रत्नघण्टाहस्ताभ्यां ऐरावतीमहाभैरवावायुवेगासुराभक्ष्यः हरिताऽऽलिङ्गिताः ।

---

1 B omits यथा......पातालपर्यन्ता 2 B °यक्रमोऽ° 3 B °स्थि° 4 B omits °वज्र° 5 C °क्रोद्य° 6 B °करालवज्र° 7 B धर्म° 8 C °नां शत्प° 9 B °णी 10 B °लि° 11 C °स्या 12 B omits 13 B omits °भृत्° 14 B presents a long gap at this point. For the bracketted portion C is our only guide.

अमिताभकूटागारस्य मध्ये मयूरोपरि विश्वाब्जसूर्यस्थमहेश्वरहृदि वज्रपर्यङ्की पद्मडाको रक्तः पद्मपद्माङ्कघटाञ्चितदक्षिण[वाम][1]पाणिभ्यामालिङ्गितरक्तपद्मडाकिनीकः।

द्वारेषु सुभद्रवज्रप्रभमहाभैरवविरूपाक्षाः रक्ताः सपद्मपद्मघण्टाहस्ताभ्यां श्यामादेवी-सुभद्राहयकर्णाखगानना: सिताऽऽलिङ्गिताः।

अक्षोभ्यकूटागारस्य मध्ये गजोपरि विश्वाब्जसूर्यस्थविष्णुहृदि वज्रपर्यङ्की वज्रडाकः कृष्णः सव्येतरपाणिभ्यां वज्रवज्रघण्टाभृद्भुजाभ्यामाङ्गितवज्रडाकिनीकः। सा तु रक्ता कृष्णा वा।

द्वारेषु महाबलरत्नवज्रहयग्रीवा[का][2]शगर्भाः कृष्णाः वज्रवज्रघण्टाहस्ताभ्यामालिङ्गित-चक्रवेगाखण्डरोहाशौण्डिनीचक्रवर्मिण्यः पीताः क्रोडयन्ति।

अमोघसिद्धिकूटागारस्य मध्ये गरुडोपरि विश्वाब्जसूर्यस्थेन्द्रहृदि वज्रपर्यङ्की विश्वडाको हरितः सव्यवामहस्ताभ्यां विश्ववज्रविश्ववज्राङ्कघण्टाञ्चिताभ्यामालिङ्गितहरितविश्वडाकिनकिः।

द्वारेषु हेरुकपद्मनर्त्तेश्वरवैरोचनवज्रसत्त्वा हरिता विश्ववज्रविश्ववज्रघण्टाधरकराभ्यां सुवीरामहाबलाचक्रवर्त्तिणीमहावीर्या धूम्रधूसरवर्णा उत्सङ्गयत्न:।

चतुर्विंशतिवीरा आलीढस्थाः।

इह डाकिन्यादिचतस्रो वामे कपालं खट्वाङ्गं च दक्षिणे डमरुं विभ्रत्यः।

ज्ञानडाकिन्याश्चण्डाल्यादीनां चोद्यतदक्षिणकरे वज्रतर्जनीं च।

बुद्धडाकिन्या वारमत्यादीनां च चक्रवत्तर्जनीं च ]।[3]

रत्नकडाकिन्या ऐरावत्या[4]दीनां च सरत्नतर्जनीं च।

पद्मडाकिन्याः श्यामादेव्यादीनां च सपद्मतर्जनीं च।

वज्रडाकिन्याश्चक्रवेगादीनां च सवज्रतर्जनीं च।

विश्वडाकिन्याः सुवीरादीनां च विश्ववज्रतर्जनीं च।

सर्वासामपि ज्ञानडाकिन्यादीनामालिङ्गनवामकरेषु सुचन्द्रस्थ[5]पूर्णक[104b]पालानि।

महामण्डलस्य द्वारे[6]षु काकास्योलूकास्याश्वानास्याशूकरास्या नामरूपवक्त्राः यथाक्रमं नीलपीतरक्तहरिताः अङ्कुशपाशस्फोटघण्टाभृत्सव्यभुजाः।

कोणेषु यमदाही[7]यमदूतीयमदंष्ट्रीयममथन्यो मानुषीमुखाः सव्येतरदेवीवर्णाः सव्येतर-शरीरार्धा दर्पणवीणागन्धशङ्खरसभाजनभृत्सव्यकराः।

अष्टावपीमाः कपालखट्वाङ्गभृद्वामभुजा आलीढस्थाः।

---

1 Not in the Ms 2 Not in the Ms 3 B resumes after this 4 C °तीमहाभैरवा° 5 B सवद्रजः° 6 B °स्यारे 7 B °दि.

षण्णामपि कूटागाराणां कोणेषु शुक्रा[1]दिपूर्णानि कपालानि विश्वा[ 105a ]ब्जस्थानि ।

डाकिन्यादयो यममथनीपर्यन्ता विश्वाब्जसूर्यस्थशवेषु स्थिताः । चक्रवर्तिन्योऽपि शवस्था इति पक्षान्तरम् ।

देवताः पश्चात्स्खलद्व्याघ्र[2]चर्मवसना धृतयज्ञोपवीता गलावलम्बितसार्द्र[3]मुण्डमालाः कृष्णजटामुकुटिन्यः । देव्यस्तु नग्ना मुक्तकृष्णकुन्तला गलावलम्बिशुष्कमुण्डमालाः ।

द्वाचत्वारिंशदपि देवता द्विभुजा त्रिनेत्रैकवक्त्रा वज्रमालाङ्कललाटोपरि धृतपञ्चकपालाः केयूरघुर्घुरा[4]दिभिर्मण्डिताः पञ्चमुद्रिण्यः । च[ 105b ]क्रवर्त्तिनः परं षण्मुद्रिणो मण्यर्धचन्द्रविश्ववज्राङ्कजटामुकुटाः स्वस्वचक्रेशाभिमुखाश्चतुस्त्रिंशद्देव्यो मध्यचक्रेशाभिमुखास्तु पञ्चचक्रवर्त्तिनः ।

काकास्यादयो वीरास्तु स्वप्रज्ञाभिमुखा एवमयमेकः पक्षः ।

षट्चक्रवर्त्तिनोऽप्यालीढचरणा इति विशेषाद्द्वितीयः पक्षः ।

एतत्पक्षद्वयेऽपि ज्ञानडाको बुद्धडाकश्च तयोर्माण्डलेयाश्च सिंहोपरि । रत्नडाकस्तन्माण्डलेयाश्च [ तुरगोपरि । पद्मडाकस्तन्माण्डलेयाश्च ][5] मयूरोपरि । वज्रडाकस्तन्माण्डलेयाश्च ह[ 106a ]स्तिवाहनाः । विश्वडाकस्तन्माण्डलेयाश्च गरुडवाहनाः ।

एते ज्ञानडाकादयो वज्रपर्यङ्किणः काकास्यादयोऽष्टदिक्पालाश्चालीढस्था इति तृतीयः पक्षः ।

एषु पक्षेषु[6] पक्षान्तरेषु च ज्ञानडाकादीनामेकमुखचतुर्भुजत्वादिकं त्रिमुखषड्भुजत्वादिकं पञ्चमुख[7]द्वादशभुजत्वादिकमष्टमुखषोडशभुजत्वादिकं च प्रपञ्चितं भगवता । ग्रन्थविस्तरत्रासान्नोक्तानि तानि ।

कुलेशास्तु षट्चक्रवर्त्तिनः स्वस्वमा[8]ण्डलेयानाम् । वज्रडाक[9]स्तु षट्[106b]चक्रवर्त्तिनाम्[10] । तस्य ज्ञानडाकः । काकास्यादीनां विश्वडाकः । ज्ञानडाक इति कश्चित् ।

हृद्बीजानि ज्ञानडाकादीनां यथाक्रमं ॐ भ्रूँ आँ ह्रीँ खँ हूँ । हृदयमन्त्रास्तु ॐ श्रीमहासुख वज्रसत्त्व डाकिनीजालसम्बर हूँ आः हूँ फट् स्वाहा । ॐ श्रीबुद्धडाक अललल भ्रूँ आः डाकिनीजालसम्बर हूँ फट् स्वाहा । ॐ श्रीरत्न[11]डाक त्राँ[12] आः हूँ[13] डाकिनीजालसम्बर

1 B °क्रा° 2 B °स्खलव्याघ्र° 3 B °श्च° 4 B °घुंघुरा° 5 C omits the bracketted portion 6 B पक्षसु 7 B adds षडभुजत्वादिकं चतुर्मुख° 8 B °म° 9 B °का° 10 B °नी 11 B वज्र° 12 B omits 13 B adds कट्.

हूँ फट् स्वाहा। ओँ श्री पद्म[1]डाक ह्रीः हूँ[2] डाकिनीजालसम्बर हूँ फट् स्वाहा। [ ओँ श्री वज्रडाक आः हूँ डाकिनीजालसम्बर हूँ फट् स्वाहा। ओँ श्री विश्वडाक ग्वँ अः डाकिनी-जालसम्बर हूँ फट् स्वाहेति॥ ][3] ओँ खँ हूँ फडिति खण्डरोहायाः [107a] सार्वकार्मिकमन्त्रः।

॥ इति षट्चक्रवर्त्तिमण्डलम् ॥

---

1 B विश्व° 2 B स्वहाः अः हूं 3 B omits the bracketted portion.

## [ अथ कालचक्रमण्डलम् । ]

कालचक्रमण्डले वज्रपञ्जराभ्यन्तरे रक्षाचक्रं दशारं तस्य पूर्वदक्षिणपश्चिमोत्तरारेष्वति-बलकुम्भकजम्भक[1]मानवका[2] विघ्नान्तकप्रज्ञान्तकयमान्तकप्रज्ञान्तकापरनामानः। आग्नेयाद्यारेषु नीलदण्डटक्किराजमहाबलाचलाः। ऊर्ध्वारे उष्णीषचक्रवर्ती अध आरे सुम्भराजः।

यदुक्तं मूले—

पश्चाचक्रे दश[3]दिशि गतं भावयेत् क्रोधवृन्दम्। इति।

विमलप्रभायां च रक्षाचक्रं क्रोधादिकं स्फारणीयं मण्डलभूमिरक्षार्थ[4]मिति [107b]।

एते क्रोधा वक्ष्यमाणरूपा रक्षाचक्रस्य नाभ्यन्तरे धर्मोदया। यदुक्तं विमलप्रभायाम्-बाह्ये उत्पत्तिनिमित्तमनन्ताकाशधातुरध्या[5]त्मनि प्रज्ञा धर्मोदया त्रिकोणेति। आकाशधातुरेव हि धर्मोदयारूपो[6] भाव्यते मण्डले। धर्मोदयायां मध्ये वायुस्तेजस्तोयपृथ्वीमण्डलस्थ[7]सुमेरु-विश्वाब्जचन्द्रसूर्ये नीलबिन्दुरूपराहुमण्डलोपरिस्थितं बहिर्वज्रार्चिराकाशानिलानलसलिलोर्वी-[8] परिकलितं महाकूटागारम्।

अथवा रक्षाचक्रं विघ्नोपशममात्र[9]प्र[108a]योजनमिति। विघ्नघातानन्तरमचिन्तयित्वा धर्मोदयां चाभा[10]वयित्वा रक्षापञ्जराभ्यन्तरे आकाशधातुवाय्वादिमण्डलानां राहुमण्डल-पर्यन्तानामुपरिस्थितं बहिरर्चिरादिवलयैः परिवृत्तं महाकूटागारम्। तदर्धं वाड्म[11]ण्डलं तदर्धं चित्तमण्डलं तदर्धं महासुखचक्रं तदर्धं भगवतो हरितपद्मम्। पद्मतृतीयभागे[12] कर्णिका।

तस्यामुपर्युपरिस्थितचन्द्रसूर्यराहुकालाग्निमण्डलो[13]परि उत्तानानङ्गरुद्रहृदययोरालीढेन नृत्यन् भगवान् कालचक्रः[108b] कृष्णो मण्यर्धचन्द्रविश्वबज्राङ्कित[14]जटामुकुटी वज्रमणि-वज्रकुण्डलवज्रकण्ठिकावज्ररुचकवज्रमेखलावज्रनूपुरवज्रपट्टवज्रमालास्खलद्व्या[15]घ्रचर्माम्बरधरो द्वाद-शनेत्रश्चतुर्मुखः। ततः मूलमुखं कृष्णं दंष्ट्राकरालोग्रं दक्षिणं रक्तं सरागं पश्चिमं पीतं समाधिस्थं वामं श्वेतं शान्तम्। नीलरक्तसितमध्यसव्यवामास्त्रयः कण्ठा इति। त्रि[16]ग्रीवो भगवान्। दक्षिणस्कन्धप्रथमो नीलो द्वितीयो रक्तस्तृतीयः शुक्लस्तथा वामो नीलो रक्तः सित इति षट्[109a]स्कन्धोऽसौ। द्वादशबाहुरुपबाहुतः प्रभृति चतुर्विंशतिसहस्रः[17]। तत्र दक्षिणौ द्वौ बाहू नीलौ द्वौ रक्तौ द्वौ शुक्लौ तथा वामौ। एवं कराश्चत्वारः कृष्णाश्चत्वारो[18] रक्ताश्चत्वारः

1 B °जम्भकुम्भ° 2 B °मानका 3 C दशारे दिशि वि° 4 C °क्षत्व° 5 B °ध्या° 6 B omits °रूपो 7 Instead of °मण्डलस्थ° C has आकाशादिषु चन्द्रमण्डले। 8 C °लाब्धि° 9 C °मनु° 10 C च भा° 11 C पद्मम° 12 B पद्मभोगिका 13 B omits °मण्डल° 14 C °ज्रमण्डित° 15 B °लास्थो व्या° 16 B omits त्रि° 17 C °हस्तः 18 B omits.

शुभ्रा: । सव्या वामाश्च प्रीतिकराः । पञ्चाङ्गुल्यस्तासां प्रत्येकं त्रीणि पर्वाणि । तत्राङ्गुष्ठ: पीतस्तर्जनी शुक्ला मध्यमा रक्ताऽनामिका कृष्णा कनिष्ठा हरिता । हस्ततलात् सर्वाङ्गुलीनां प्रथमा पर्वपंक्ति: कृष्णा द्वितीया रक्ता तृतीया शुक्ला । ताश्च मुद्रिका[1]भिर्दीप्तिमत्य: ।

दक्षिणेषु करेषु कृष्णेषु[2] [109b] वज्रखड्गत्रिशूलकर्त्रिका: रक्तेष्वग्निबाणवज्राङ्कुशा:[3] शुक्लेषु चक्रकुन्तदण्ड[4]परशव: । वामेषु कृष्णेषु च वज्रघण्टाफलके विकासितमुखखट्वाङ्गं रक्तपूर्णकपालं च रक्तेषु कोदण्ड[5]पाशौ मणिरत्नं पुण्डरीकं च शुक्लेषु दर्पणवज्रशृङ्खलाब्रह्मशिरश्च ।

ऊरुत: प्रभृति रक्तवर्णदक्षिणचरणतलेन रक्तवर्णेन हृद्याक्रान्त: कामदेवो रक्तवर्ण: एकवक्त्र: पञ्चपुष्पबाणधनु: पाशाङ्कुशधरश्चतुर्भुज: ।

ऊरुत: प्रभृति श्वे[110a]तवामपादतलेन शुक्लेन हृद्याक्रान्तो रुद्र: शुभ्र: त्रिनेत्रैकवक्त्र: त्रिशूलडमरुकपालखट्वाङ्गभृच्चतुर्भुज: ।

कामदेवस्य पार्श्वे रतिर्महेश्वरस्य गौरी । एते देव्यौ दीनवदनेन[6] धृतभगवच्चरणे ।

भगवतालिङ्गिता तु विश्वमाता प्रत्यालीढस्था सुवर्णवर्णा दक्षिणकरै: कर्त्रिकाङ्कुशडमरुकाक्षसूत्राणि वामै: शक्तिपाशपुण्डरीकरत्नानि बिभ्रती ।

पूर्वदले कृष्णा दीप्ता[7] कृष्णा सव्यहस्तैर्धूपकटच्छुं चन्दनपात्रं कुङ्कुमपात्रं कस्तूरीसहितं कर्पूरपात्रं वामैर्घण्टापद्मं सुरतरु[110b] कुसुमं नानापुष्पमालां च दधाना ।

दक्षिणे रक्तदीप्ता रक्ता सव्यैर्दीपं हारं मुकुटं कटकं च वामैर्वस्त्रं मेखलां रत्नकुण्डलं[8] नूपुरं च बिभ्रती ।

पश्चिमे पीतदीप्ता पीता सव्यै: शङ्खं वेणुं मणिं डमरुं च वामैर्वीणां ढक्कां कंसिकां काहलां च बिभ्राणा ।

उत्तरे श्वेतदीप्ता श्वेता सव्यैर्दुग्धपात्रमम्बुपात्रदिव्यौषधं मद्यपात्रं च वामैरमृतपात्रं सिद्धरसपात्रममृतफलं भक्तपात्रं च बिभ्रती ।

आग्नेयादिषु[9] धूमामरीचीप्रतिपाखद्योतादेव्यो यथाक्रमं कृष्णरक्तपीतसितवर्णा अष्टभुजै:[10] [111a] स्वस्ववर्णाष्टचामरधरा: ।

तासां पृष्ठतो बहि: चिन्तामणिधर्मग[11]ण्डीकल्पवृक्षधर्मशङ्खानि कृष्णरक्तपीतसितानि ।

---

1 C °ता° 2 C कृष्णकरेषु 3 B adds डमरुमुद्गरश्च 4 C °न्द्र° 5 B चापदण्ड° 6 B दीनवन° 7 C धूपा 8 B °ले 9 B °क्षु 10 B °जा: 11 C °म°.

कृष्णदीप्तादयोऽ[1]ष्टौ समपद[2]स्थाः। सर्वा विश्वमातादिदेव्यः पञ्चमुद्रिण्योऽष्टभुजा द्वादशलोचनाश्चतुर्वक्त्राः।

तत्र पूर्वदक्षिणपश्चिमोत्तरक्रमेण मुखानि विश्वमातुः पीतशुक्लनीलरक्तानि। एवं पीतानां देवीनाम्। कृष्णानां तु कृष्णरक्तपीतसितानि रक्तानां रक्तपीतशुक्लनीलानि सितानां सितकृष्णरक्तपीतानि। द्वितीयतृतीयपुटयोर्देवतास्त्रिन[111b]यनास्त्रिवदनाः षड्भुजाः।

तत्र पूर्वस्यां दिशि अमोघसिद्धिः कृष्णः कृष्णरक्तसितवदनः सव्यैः करैः खड्गकर्त्रि-त्रिशूलानि वामैः फलककपालखट्वाङ्गानि दधानो लोचनालिङ्गितः।

दक्षिणस्यां रत्नसम्भवो रक्तो रक्तसितकृष्णाननः सव्यैरग्निबाणं वज्राङ्कुशं डमरुं च वामैश्चापं नवांशरत्नं[3] च बिभ्राणो मामक्यालिङ्गितः।

पश्चिमायां वैरोचनः पीतः पीतसितकृष्णमुखः सव्यैश्चक्रं दण्डमभयकरकुलिशं च वामैः खड्गं[4] वज्रं शृङ्खलां वज्रघण्टां च द[112a]धानस्तारालिङ्गितः।

उत्तरस्याममिताभः शुभ्रः सितकृष्णरक्तवक्त्रः सव्यैर्मुद्गरकुन्तात्रिशूलानि वामैः पुण्डरीकदर्पणाक्षसूत्राणि बिभ्राणः पाण्डरालिङ्गितः।

एते चत्वारः सिताब्जसूर्यस्थाः जटामुकुटिनो मुखानि मूलसव्यवामक्रमेण आग्नेय-नैर्ऋत्यवायव्यैशानरक्ताब्जेन्दुषु तारापाण्डरालोचनामामक्यो यथाक्रममोघसिद्धिरत्नेश-[5]शाश्वतामिताभसन्निभाः वैरोचनामिताभामोघसिद्धिरत्नसम्भवैः समापन्नाः। तारायाः खट्वाङ्ग-स्था[112b]ने उत्पलं वा। अष्टकक्षास्वष्टावमृतकलशाः।

तृतीयपुटे पट्टिकायां पूर्वद्वारस्य वामपार्श्वे समन्तभद्रो नीलः सव्यैर्वज्रकर्त्रिपरशून् वामैर्घण्टाकपालब्रह्मशिरांसि दधानः। ब्रह्मशिरःस्थाने उत्पलं वा। धर्म[6]वज्रासमापन्नोऽयम्।

दक्षिणे खगर्भोऽमोघसिद्धिवद्गन्धवज्रालिङ्गितः।

दक्षिणद्वारस्य वज्रपाणिर्हरितः सव्यैर्वज्रकर्त्रिपरशून् वामैर्घण्टाकपालब्रह्मशिरांसि दधानः शब्दवज्रालिङ्गितः।

क्षितिगर्भो रत्नसम्भववद्रूपवज्रालिङ्गितः।

पश्चिमद्वारस्य धर्म[113a]धातुवज्रो वज्रपाणिवत् समन्तभद्रालिङ्गितः।

सर्वनिवरणविष्कम्भी वैरोचनवत् स्पर्शवज्राश्लिष्टः।

उत्तरद्वारस्य शब्दवज्रा समन्तभद्रवज्रवद्वज्रपाणिनालिङ्गितः।

---

1 B दीप्ता°   2 B °य°   3 B °नरत्नं (?)   4 C शङ्खं   5 B °रत्नसम्भव°
6 C धर्मधरतुधर्म°.

लोकेश्वरोऽमिताभसन्निभो रसवज्रालिङ्गितः ।

विदिक्ष्वाग्नेयां स्पर्शवज्रा तारेव सर्वनिवरणविष्कम्भिना समापन्ना[1] ।

नैर्ऋत्यां रसवज्रा पाण्डरेव लोकेश्वरालिङ्गिता ।

वायव्यां गन्धवज्रा लोचनेव खगर्भालिङ्गिता ।

ऐशान्यां रूपवज्रा मामकीव क्षितिगर्भेना[2]लिङ्गिता ।

अ[113b]त्रामोघसिद्ध्यादयस्तथागता बोधिसत्त्वाश्च वज्रासनस्थाः । तारादिदेव्यः पद्मासनस्थाः ।

पूर्वद्वारेऽतिबलक्रोधोऽमोघसिद्धिवत् स्तम्भकीसमाश्लिष्टः । सा तु लोचनेव[3] ।

दक्षिणे जम्भको[4] रत्नसम्भव[5]वत् मामकीसमापन्ना । सा तु मामकीसमा ।

पश्चिमे स्तम्भको वैरोचनवत् अतिबलालिङ्गितः । सा तु तारेव ।

उत्तरे मानकोऽमितायुरिव जम्भकी[6]समालिङ्गितः । सा तु पाण्डरासमा ।

किन्त्वेते क्रोधा आलीढस्थाः क्रोधदेव्यस्तु प्रत्यालीढस्थाः[7] । अत्र पुंदेवतानामासनं श्वेतपद्मे[114a]षु सूर्यस्थम् । [8]स्त्रीदेवतानां रक्ताब्जेषु चन्द्रमण्डलानि । अथवा कृष्णश्वेतहरित-चन्द्रस्था रक्ताः पीताः । समन्तभद्राः शब्दवज्राश्च सूर्यमण्डलस्थाः । पंक्तिस्तूक्ता तु विमल-प्रभायाम्—इह यत्र स्थाने या देवतोक्ता[9] तत्र सा प्रधानत्वाच्चक्रेशाभिमुखी न तु तदुत्सङ्गस्था इहास्ति । यत्र देवी घण्टां धर्मशङ्खादिकं च वर्जयित्वा पञ्चविंशा[10]त्मकचित्तमण्डलं भाव्यते तत्रोपविष्टोऽपि भगवान् भवति श्रीसमाजवत् ।

वेदिकायां पूर्वस्यां वामस्य तोरणस्तम्भमूलस्य वामे[11] गन्धा कृष्णा गन्धशङ्खहस्ता ।

सव्यस्य सव्ये माला नीला गृहीतकुसुममाला ।

दक्षिणस्यां धूपा रक्ता धूप[12]कटच्छुहस्ता ।

दीपा रक्ता दीपयष्टिधरा ।

पश्चिमायां लास्या पीता पी[114b]तमुकुटभृत् ।

हास्या पीता पीतहारधारिणी ।

उत्तरस्याममृतनैवेद्यापरनामधेयाऽमिना सितफलहस्ता ।

हलाऽक्षताऽमृतफ[13]लेत्यपरनामधेया पीयूषपूर्णपात्रहस्ता ।

सर्वासु च वेदिषु असंख्या विविधा धारिण्यः पूजानैवेद्य[14]देव्यः ।

---

1 B °ना 2 B °भी° 3 B °नावत् ! 4 C °का 5 B रत्नेश° 6 B वज्रम्भी° 7 C °ढाः 8 B omits स्त्रीदेव°......मण्डलस्थाः । 9 C °ताख्या 10 C °शता° 11 B omits 12 B omits धूप° 13 C °ह° 14 B omits °नैवेद्य°.

[1][ पूर्वतोरणस्य पूजादेवीस्थाने नृत्या नीला नृत्याभिनयगृहीतवस्त्रा ।

दक्षिणस्य कामा रक्ता पद्महस्ता ।

पश्चिमस्य वाद्या पीता पटहं वादयन्ती ।

उत्तरस्य गीना सिता वज्रधारिणी ।

अयममृतादीनां न्यासोऽभिषेकपटलटीकाक्रमेण यदुक्तं सा[115a]धनपटलटीकायाम् । उत्तरस्यां वाद्या नृत्याऽऽकाशगीताकामा अधो नैवेद्यामृतफलेति । तत्रापि सेकपटलोक्तो न्यास एव वेदितव्यस्तदनुकूलग्रन्थयोजनया । अन्यथा पूर्वापरविरोधः स्यादिति । एता द्वादश-देव्यः पद्मासनस्थाः ।

वाङ्मण्डले दिक्षब्जानि रक्तानि । कोणेषु शशिरविरहितेषु विषमपदेन स्थिता देव्यः ।

तत्र प्रेतोपरिस्थितपूर्वाब्जस्य कर्णिकायां चर्चिका कृष्णा त्रिनेत्रैकवक्त्रा सव्याभ्यां कर्त्रित्रिशूले वामाभ्यां कपालखट्वा[115b]ङ्गे बिभ्रती इन्द्रालिङ्गिता ।

पूर्वाद्यष्टदलेषु भीमा उग्रा कालदंष्ट्रा ज्वलन्मुखा वायुवेगा प्रचण्डा रौद्राक्षी स्थूल-नासाः ।

गरुडोपरिस्थिताग्नेयाब्जवरटके वैष्णवी कृष्णा सव्ययोश्चक्रगदे वामयोः पद्मं शङ्खञ्च ब्रह्मालिङ्गिता ।

दलेषु श्रीर्माया कीर्त्तिर्लक्ष्मीर्विजया श्रीजयन्ती श्रीचक्री च ।

महिषोपरि याम्यपद्मस्य कर्णिकायां वाराही रक्ता शूकरमुखी । सव्ययोर्दण्डखड्गौ । वामयोः शृङ्खलाहलके । रुद्रालिङ्गिता ।

दलेषु कङ्काली कालरात्रिः प्रकुपितवदना कालजिह्वा कराली[116a]घोरा विरूपाः ।

मयूरोपरि नैर्ऋत्याब्जस्य कर्णिकायां कौमारी रक्ता षण्मुखी सव्ययोः शक्त्यङ्कुशौ वामयो रत्नपाशौ गणेशसमापन्ना ।

दलेषु पद्मानङ्गा कुमारी मृगपतिगमना रत्नमाला सुनेत्रा लीना सुभद्रा च ।

ऐरावतोपरि पश्चिमपद्मस्य पुष्करे ऐन्द्री पीता सव्ययोर्वज्रबाणौ वामयोर्घण्टाचापौ नैर्ऋत्यालिङ्गिता ।

दलेषु वज्राभा वज्रगात्रा कनकावती[2] ] ऊर्वशी चित्रलेखा रम्भाऽहल्या सुतारा च ।

हंसोपरि वायव्याब्जस्य वरटके ब्रह्माणी पीतवक्त्रा सव्ययोः पद्मं ब्रह्म[116b]दण्डं च वामयोः कुण्डं पात्रं च विष्णुना समापन्ना ।

---

1 C has a long gap here for the whole of the bracketted portion. 2 C resumes after this.

दलेषु सावित्री पद्मनेत्री जलद[1]वती बुद्धिर्वागीश्वरी गायत्री विद्युत्स्मृतिश्च ।

वृषोपर्युत्तरे सरोरुहस्य कर्णिकायां रौद्री शुभ्रा सव्ययोस्त्रिशूलडमरू वामयोः खट्वाङ्गशरौ यमाश्लिष्टा ।

दलेषु गौरी गङ्गा नि[2]त्या त्वरिता तो[3]तला लक्षणा पिङ्गला कृष्णा च ।

सिंहोपरि ऐशानाब्जस्य कर्णिकायां लक्ष्मीः शुक्ला सव्ययोः पद्माक्षसूत्रे वामयोः पद्मरत्ने कार्त्तिकेयालिङ्गिता ।

दलेषु श्रीः श्वेता चन्द्रलेखा शशधरवदना हंसवर्णा धृतिश्च पद्मे[117a]शा तारनेत्रा विमलशशधरा च ।

एताश्चर्चिका[4]द्या द्वासप्ततिर्देव्यश्चतुर्भुजास्त्रिनेत्राः ।

अत्र दल[5]देव्यो ललितपदस्थाः स्वस्वनायिकातुल्यवर्णादिभिः स्वस्वनायिकां पश्यन्त्य[6]ः । नायिकास्त्वष्टौ वि[7]शाखपदस्थाः चक्रेशस्ताभिरष्टाभिरालिङ्गितत्रिशाखपदस्थः । अनुनायिकास्तदभिमुखाः ।

कायमण्डले पट्टिकेषु द्वादशपद्मानि चन्द्रसूर्यरहितानि । तत्र दिक्पद्मानि रक्तानि कोणस्थानि श्वेतानि । प्रत्यब्जदलानि प्रथमपरिमण्डले चत्वारि द्वितीयेऽष्टौ तृतीये षोडश । तेषु बहिः परिमण्डले[8] पूर्ववद्द[9][117b]लात्प्रभृति दक्षिणावर्त्तेन प्रतिपदातिथिदेवीन्यासः ।

कर्णिकायां तु पूर्णिमाऽऽमावास्या च नायकत्वेन स्थिता । तत्र पूर्णिमा प्रज्ञा आमावास्या तूपायो नैर्ऋत्यादिसर्व[10]देवताश्चतुर्भुजाः ।

तत्र पूर्वद्वारस्य सव्यप्रदेशे रक्तप्रेतोपरि पद्मस्थकर्णिकायां नैर्ऋतिः कृष्णः सव्ययोः खड्गकर्त्री वामयोः फलकं कपालं च ज्वलदनलमुखो राक्षसीसमालिङ्गितः । अस्य[11] चैत्रतिथयः ।

आग्नेये मृगोपरि पद्मस्थ[12]पुष्करे वायुः कृष्णः सव्ययोः कल्पद्रुमः पारिजातपुष्पं च वामयोरिन्द्र[118a]नीलोनीलोत्पलं च प्रचण्डालिङ्गितः । अस्य वैशाखतिथयः ।

दक्षिणद्वारस्य वामे महिषोपरि पद्मस्य कर्णिकायां यमो रक्तः कालीसमालिङ्गितः सव्ययोर्दण्डखड्गौ वामयोः शृङ्खलापाशौ । अस्य फाल्गुनतिथयः ।

सव्ये मे[13]षोपरि सरोज[14]कर्णिकायामग्निः रक्तो वरुणालिङ्गितः सव्ययोः शक्तिदण्डौ वामयोः पद्मकमण्डलू । अस्य ज्यैष्ठतिथयः ।

---

1 B °ज° 2 B नृ° 3 B त्रो° 4 B °चक्रा° 5 B omit अत्र दल° 6 C omits नायीकां पश्यन्त्यः 7 B वैं° 8 B वै° 9 C °लं 10 C °र्वाश्चदे° 11 B omits 12 B °थ 13 B °श्रपु° 14 C महि°.

नैर्ऋत्ये मयूरोपरि सरोजस्य पुष्करे षण्मुखो रक्तवर्णः सव्ययोः शक्तिकुम्भौ वामयो रत्नदर्पणौ लक्ष्मीसमापन्नः । अस्याषा[118b]ढतिथयः ।

पश्चिमद्वारस्य वामे गजोपरि पद्मस्य वरटके कुबेरः पीतः कौबेरीसमापन्नः सव्ययोर्मणिं रत्नगदां च वामयोर्नकुलपद्मे । अस्य पौषतिथयः ।

मध्ये गजोपरि पद्मपुष्करे शक्रः पीतो वास[1]वीसमाश्लिष्टः सव्ययोर्वज्रमग्निबाणं च वामयोर्घण्टाधनुर्षा । अस्याश्विनतिथयः ।

वायव्ये हंसोपरि पङ्कजकर्णिकायां ब्रह्मा पीतो विद्युदालिङ्गितः सव्ययोः सूचिरक्षसूत्रं च वामयोः पद्मकुण्डिके । अस्य कार्त्तिकतिथयः ।

उत्तरद्वारस्य वामे वृषभोपरि पद्मस्य कर्णिकायां रुद्रः शुभ्रो गौ[119a]रीसमापन्नः । सव्ययोस्त्रिशूलबाणौ वामयोः सर्पवेष्टितखट्वाङ्गधनुश्च । अस्य मार्गशीर्ष[2]तिथयः ।

सव्ये मकरोपरि वारिजस्य कर्णिकायां समुद्रः श्वेतः सव्ययोः पाशरत्ने वामयोर्नागपाशश्चन्द्रकान्तमणिश्च वाराहीसमाश्लिष्टः । अस्य श्रावणतिथयः ।

ई[3]शाने मूषकोपरि पद्मकर्णिकायां गणेशः सितः सव्ययोः परशुवज्रे वामयोः पाशरत्ने कौमारीसमापन्नः । अस्य भाद्रपदतिथयः ।

पूर्वद्वारस्य वामे गरुडोपरि कमलकर्णिकायां विष्णुः कृष्णः श्रीसमाप[119b]न्नः सव्ययोश्चक्रगदे वामयोः पद्मशङ्खौ । अस्य माघतिथयः ।

इह देवा वज्रासनस्थाः चैत्रादिदेव्यो ललितपदाः स्वस्वाधिपतिनैर्ऋत्यादिभिर्वर्णायुधसंस्थानैः समस्तान्[1] पश्यन्ति । ते तु मण्डलेशं तैरालिङ्गितास्ताः ।

पूर्वद्वारे सप्तकृष्णशूकरैरुह्यमान[5]कृष्णरथे नीलदण्डोऽमोघसिद्धिवत् ।

अनेनालिङ्गिता मारीची पीता सव्यकराभ्यां चक्रदण्डौ वामाभ्यां शङ्खरत्ने दधाना ।

दक्षिणे सप्तरक्ताश्वरक्तरथे टक्किराजो रत्नेशवत् ।

अनेनालिङ्गिता चुन्दा शुक्ला सव्याभ्यां मु[120a]द्गरकुन्तौ वामाभ्यां पद्मदण्डौ बिभ्राणा ।

पश्चिमे सप्तपीतगजपीतरथे महाबलो वैरोचनवत् ।

अनेनाश्लिष्टा वज्रशृङ्खला कृष्णा सव्याभ्यां मणिकुलिशे वामाभ्यां कलश[6]सर्पौ बिभ्रती ।

उत्तरे सप्तसितसिंहसितरथेऽचलोऽमिताभवत् ।

अनेनालिङ्गिता भृकुटी रक्ता सव्याभ्यां बाणाङ्कुशौ वामाभ्यां कोदण्डपाशौ दधाना ।

---

1 B °य° 2 C °र्गस्य 3 C ए 4 C omits 5 B राहुमाने 6 B फलक°.

चक्रेशस्योर्ध्वमाकाशे त्रिनेत्रपञ्चवर्गगरुडेनोह्यमाने हरितरथे उष्णीषचक्रवर्ती वज्रपाणिरिव ।

अस्य प्रज्ञातिनीला नीलवर्णा सव्याभ्यां कर्त्रिवज्रे वामाभ्यां [120b] कपालघण्टे दधाना ।

चक्रेशस्याधस्तात्पातालेऽष्टपादसप्तकृष्णशार्दूलकृष्णरथे सुम्भराजः समन्तभद्रवत् ।

अस्य प्रज्ञा रौद्राक्षी हरिता सव्याभ्यां परशुत्रिशूले वामाभ्यां नागपाशं खट्वाङ्गं[1] च बिभ्रती ।

तत्र नीलदण्डादिक्रोधा रथोपरि सितपद्मसूर्येष्वालीढस्था[2]ः । नायकाः स्वस्व[3]स्थाने स्थित्वा चक्रेशं पश्यन्ति । मारीच्यादयस्तु प्रत्यालीढस्थाः । अनुनायिकाः परस्थानगम[4]नात् क्रोधान् पश्यन्ति ।

अत्र रथानां कृष्णादिवर्णत्वं भवति कुलवशात् । 'स्यन्दनो द्वारमध्ये' इत्यनेन प्रतिपादितम् । तदनुसारात् शू[121a]करादीनामपि ।

तोरणस्तम्भानां मध्ये वेदिस्थाने ऊर्ध्वमधश्च फणि[5]नः ।

तत्र पूर्वद्वारस्य वामदक्षिणयोर्वायुमण्डलयोर्यथासंख्यं पद्मकर्कोटकौ कृष्णौ श्वानास्याकाकास्यालिङ्गितौ ।

दक्षिणद्वारस्य वह्निमण्डलयोर्वासुकिशङ्खपालौ रक्तौ शूकरास्यागृध्रास्यासमापन्नौ ।

पश्चिमद्वारस्य पृथ्वीमण्डलयोस्तक्षकमहापद्मौ पीतौ जम्बुकास्यागरुडास्याश्लिष्टौ ।

उत्तरस्य द्वारस्य[6] जलमण्डलयोरनन्तकुलिकौ शुक्लौ व्याघ्रास्योलूकास्यालिङ्गितौ ।

ऊर्ध्वाकाशे शून्यमण्डले जयो ह[121b]रितोनीलालिङ्गितः ।

अधःपाताले शून्यमण्डले विजयो नीलो वज्राक्षीसमापन्नः ।

सर्वे नागा वज्रासनस्थाश्चतुर्भुजाः सव्याभ्याममृतघटं वज्रं च वामाभ्यां पद्मरत्ने बिभ्राणाः ।

पृथ्वीवलयविदिश्यैशान्यामुद्गतं[7] पूर्णिमाचन्द्रमण्डलम् । नैर्ऋत्यामस्तंगच्छन् सूर्यः ।

अग्निवायुवलय[8]योर्मध्ये महाश्मशानेष्वष्टारचक्राणि दिक्षु रक्तानि विदिक्षु सितानि ।

अत्र पूर्वचक्रे श्वानास्या कृष्णा [दक्षिणे शूकरास्या रक्ता][9] पश्चिमे जम्बुकास्या पीता उत्तरे व्याघ्रास्या सिता । आग्नेयादिषु काकास्या गृध्रास्या गरुडास्या उलूका[122a]स्याः कृष्णरक्तपीतसिताः ।

---

1 B खड्गं 2 C °र्यस्था 3 B स° 4 C °ग° 5 B °लि° 6 B °रस्य 7 B °मुदजन् 8 B °रट° 9 B omits the bracketted portion.

ऊर्ध्वाकाशरथेऽनिला नीलवर्णा । अस्या रथो यथाऽनिलायाः[1] ।

अधःपातालरथे वज्राक्षी हरिता । अस्या रथो यथा रौद्राक्ष्याः ।

एताः श्वानास्यादयो मण्डलपदेन स्थिताः प्रागुक्तपद्मादिभिरालिङ्गिताः कर्त्रिकपाल-भृत्सव्येतरकरद्वयास्त्रिनेत्रा नग्नाः पञ्चमुद्रिण्यो गलावलम्बितमुण्डमालाः ।

आद्यष्टानां च क्रमेण तलेषु यथाक्रमं खड्गीभल्लुकसिंहचमरीभेरुण्डक्रौञ्च[2]नीलाक्ष-व्याघ्रवलयाः ।

एष्वेव श्मशानेषु वायुवलये पूर्वाग्नेयदिशौ वा[122b]युमण्डलस्थौ चन्द्रसूर्यौ दक्षिण-नैर्ऋत्ये अग्निमण्डलस्थौ बुध[3]मङ्गलौ पश्चिमवायव्ये पृथ्वीमण्डलस्थौ केतु[4]शनैश्चरौ उत्तरैशान्यां तोय[5]स्थौ शुक्रबृहस्पती ऊर्ध्वशून्यमण्डले राहुरधःशून्यमण्डले कालाग्निस्तथाऽत्र वायुवलये ध्रुवोऽगस्त्यो नक्षत्राण्यष्टाविंशतिः द्वादश राशयः षोडश कला दश दिग्लोकपालाः नन्दि[6]महा-कालघण्टाकर्णभृङ्गिनः क्षेत्रपाला दूत्यो हारीती सर्वसिद्धयश्चेत्यादयः[7] सार्धत्रिकोटिभूतविशेषा नानावर्णचिह्नसंस्थानाः ।

अत्र चन्द्रा[8]दयो देवा वज्रासनस्था दे[123a]व्यस्तु ललितपदस्थाः ।

बाह्यमण्डलस्य वेदिष्विच्छादेव्यः । तत्र पूर्वस्यां वेदिकायां[9] द्वारस्य दक्षिणदिग्देशे विद्वेषेच्छा तारेव, अंशुकेच्छा स्पर्शवज्रेव, कायकण्डूयनेच्छा चामुण्डेव, वदनकफोत्सर्जनेच्छा वैष्णवीव, उच्चाटनेच्छाऽतिबलेव ।

द्वारस्य वामे संतापनेच्छाऽतिनीलेव, स्पर्शेच्छा वज्रशृङ्खलेव, सर्वाङ्गक्षेपणेच्छा[10] वारा-हीव, ओदनेच्छा[11] श्वानास्येव, उत्सृष्टभक्ते[12]च्छा काकास्येव ।

दक्षिणस्यां द्वारस्य सव्ये स्तोभ[13]नेच्छा पाण्डरेव, भोजनेच्छा रसवज्रेव, अङ्गमले[14]च्छा वाराहीव, नृत्येच्छा कौमारीव, शोषणेच्छा जम्भनीव ।

वामे आकृष्टी[123b]च्छा भृकुटीव, धावनेच्छा रौद्राक्षीव, मूत्रविट्शमने[15]च्छा शूकरास्येव, संग्रामेच्छा गृध्रास्येव ।

पश्चिमायां द्वारस्य सव्ये स्तम्भनेच्छा लोचनेव, गन्धेच्छा गन्धवज्रेव, शयने[16]च्छा ऐन्द्रीव, पेयपिपा[17]सनेच्छा ब्रह्माणीव, बन्धनेच्छा स्तम्भनीव ।

वामे मैथुनेच्छा धर्मधातुवज्रेव, कीलनेच्छा मारीचीव, वज्रने[18]च्छा जम्बुकास्येव, अहि-बन्धनेच्छा गरुडास्येव ।

1 C °थोऽतिनीलाया 2 B °क्र° 3 B °द्व° 4 B omits केतु° 5 C °न्यस्थान° 6 B °न्द्र° 7 B omits °श्चेत्यादयः 8 B चन्द्रा° 9 B दिशायां 10 C मूलेच्छा 11 B omits वाराहीव, ओदनेच्छा 12 B °ये° 13 C °द° 14 B °से° 15 B °शाव° 16 B °नगर्जने° 17 C °लिंचा° 18 C बंधे°.

उत्तरस्यां द्वारस्य सव्ये[1] पुष्टीच्छा मामकीव, भूषणेच्छा रूपवज्रेव, आसनेच्छा रौद्रीव, राज्येच्छा लक्ष्मीरिव, मृदुवचनेच्छा माम[2]कीव ।

वा[124a]मे वाद्ये[3]च्छा शब्दवज्रेव, बन्धनेच्छा चुन्दे[4]व, बहुकलहेच्छा व्याघ्रास्येव दारकक्रीड[5]नेच्छा उलूकास्येव ।

एता: षट्त्रिंशद्देव्यो भाव्या: । यदुक्तं मारणेच्छा वज्रधात्वीश्वरीजन्यो[6]त्पादनेच्छा विश्वमातृजन्येतीच्छाद्वयं तद्यथायोगमिच्छान्तरयोरन्तर्भावितम् । न तु पृथग्भावितम् । अन्या अपि या: काश्चिदिच्छास्ता: सर्वा: षड्त्रिंशदिच्छास्वेव यथायोगमन्तर्भाव्या इत्याकूतेनैव । अन्तर्भाविता चोपलक्षणपरतयैकेच्छा यदुक्तं 'सप्तत्रिंशदिच्छेति[7]' ।

अत एवोक्तं विमलप्रभायाम्—अपरमपि य[124b]त्किञ्चित्सत्त्वकृत्यमिच्छा तत्सर्वं योगिनीकृतमन्त्रधातुवशादिति । अत एव रजोमण्डले न्यासनयानि षट्त्रिंशदेव बीजान्युक्तानि । किन्तु तत्र कीलनेच्छाया: सँ इति बीजस्य पूर्वद्वारे वामे न्यास उक्तो वञ्चनेच्छाया: कँ इति बीजस्य दक्षिणद्वारे वामे अहिबन्धनेच्छाया: लँ इति बीजस्योत्तरद्वारे वामे । न त्वेवमिच्छा[8]-देवीभावनायाम् ।

यदुक्तं विमलप्रभायाम्—सप्तत्रिंशदिच्छावाङ्मण्डले स्वस्वकुलभेदेन स्वस्वदिक्ष्विति । एतच्च सर्वमवश्यमित्युपगन्तव्यमन्यथा बहुधोक्तषट्त्रिंशदि[125a]च्छेत्यादिवाक्यानां[9]परस्परविरोध: स्यात् । आसामिच्छानां निवर्तनस्वरूपा: प्रतीच्छा: षट्त्रिंशत् कायमण्डलवेदिषु पूर्ववत् स्वकुलवशात् ।

स्वस्वदिक्षु चक्रेशादितथागतेभ्योऽन्या: सर्वा देवता विचित्ररत्नमुकुटिन्य: । इह यदा भगवान् कालचक्रो वज्रसत्त्वस्वभावो व्यवस्थाप्यते तदा हरितवर्णाक्षोभ्येन[10] मुद्रित: ।

एवं विश्वमाता यदा त्वक्षोभ्यस्वभावा तदा नीलाक्षोभ्यमूर्त्या वज्रसत्त्वेन । एवं विश्वमाता धर्मधात्वीश्वरी[11]स्वभावा । एवं हि ज्ञानविज्ञानयो[12]: परस्परमुद्रणं भवति । तदु[125b]क्तं विमलप्रभायाम्—परमजिनप्रतिज्ञानभवा[13] विश्वमाता ज्ञानधातुर्विज्ञानधातुरिति ।

अत्र ज्ञानं शून्यताकरुणैकरसाक्षरमहासुखज्ञानम् । यदा तु कालचक्रो विज्ञानस्कन्धस्तदा विश्वमाताऽऽकाशधातुवज्रधात्वीश्वरीस्वभावेत्यर्थ: । अत एवोक्तमालिङ्गिता वज्रधात्वीश्वर्या विश्वमात्रेति वज्रधात्वीश्वर्या सार्धं विज्ञानं गर्भपद्मे महासुखचक्रे इति शेष:[14] ।

अमोघसिद्धिरत्नेशवैरोचनामिताभा हरिताक्षोभ्येण मुद्रिता: । अथवाऽमोघसिद्धीरत्नेशेन रत्नसम्भवोऽमिताभे[126a]न वैरोचनोऽक्षोभ्येण हरितेन ।

---

1 C मध्ये 2 B °न° 3 B °हये° 4 B चन्द्रे° 5 B °क्रोश° 6 C °बीजेनो° 7 C °च्छास्वेव and repeats यथायोगं......°कृतेनैव । 8 C नत्येच्छा° 9 C °वाक्याय°. 10 C °स्वर्णाभ्येन ? 11 B °धातु° 12 B ज्ञानयो: only 13 B स्कन्धा 14 C सुख इति.

समन्तभद्रः शब्दवज्रा सुम्भराजोऽतिनीलाऽनिला रुद्रो जम्भलो विजयनागश्च नीलाक्षोभ्यमूर्त्या वज्रसत्त्वेन मुद्रिताः।

वज्रपाणिर्धर्मधातुवज्रा उष्णीषचक्री रौद्राक्षी विष्णुर्यमो जयनागश्च हरिताक्षोभ्येण।

अपरास्तु देवताः कृष्णा अमोघसिद्धिना रक्ता रत्नसम्भवेन पीता वैरोचनेन श्वेता अमिताभेन।

एते षण्मु[1]द्रिणस्तथागताः सोष्णीषा[2]श्चीवरधारिणो धृतभूस्पर्शादिमुद्राः।

भगवतश्चक्रेशस्य हृद्बीजं हूँ। म[126b]न्त्रान्तरन्तु विस्तरत्रासान्नोक्तमिति।

कथ्यमाना[3]ऽपि तथा अमेया मूर्त्तिसम्पदः।
अम्भोभृदुद्वहत्यम्बुवारिधेरक्षयं पयः॥

श्रीवज्रभृन्मू[4]र्त्त्यमृतप्रवाहा-
दुदश्चदुच्चैः सुकृतामृतौघैः।
निःसीममूर्त्त्यैव[5] परस्पराभिः
परार्थकृत् स्यादभयः कृतीशः॥

॥ इति कालचक्रमण्डलम् ॥

**समाप्तेयं निष्पन्नयोगावली।**
**कृतिरियं महापंण्डिताभयाकरगुप्तपादानामिति[6]।**

---

1 C °तेऽष्टमु° 2 C स्वकीया 3 B °वा° 4 C °सूर्या° 5 B °मूर्त्यूमि° 6 The post colophon Statement in Ms. C. is as follows:—इति श्रीनिष्पन्न योगाम्बली समाप्ता। सम्वत् ९९५ मिति वैशाखकृष्णशनिश्चारावारथ्वसुन्हुथ्वपुस्तकलिखितसिद्धयेकाजुलो शुभम्।

B adds after the name of the author the following:—

ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत्।
तेषां च यो निरोध एवं वादी महाश्रमणः।[127a]।

अब्दे मातृभुजगगनैकवत्सरे नभे कृष्णमासप्रतिपदायां तिथौ उत्तराषाढारक्षत्रे वैधृतियोगे भौमवारे श्रीसूर्यमिथुने चन्द्रेधनु तद्दिने सम्पूर्णं सिद्धेति।

लिखितेयं ओँ वाहालतोल ब्रह्मचक्रमहाविहारोत्पन्न द्विजवरवंशोद्भ श्रीवज्राचार्य रत्वीरसिंहेन अयं निष्पन्नयोगाम्बरतन्त्रपुस्तके लिखापितमिति।

स्वस्ति श्रीगिरिराजचक्रचूडामणिनरनारायणेत्यादि विविधविरुदावलिविराजमानमानोन्नत श्रीमन्महाराजाधिराज श्री श्री श्री पृथ्वीवीरविक्रम[127b]शाह प्रभुठाकुरस्य विजयराज्ये[128]।

## INDEX

# APPENDIX

**List of Deities with Sanskrit Names as illustrated in Vol. II of TWO LAMAISTIC PANTHEONS by Walter Eugene Clarke. ( References are to page numbers )**

A

# ERRATA

| Page | Line | For | Read |
|---|---|---|---|
| 14 | 15 | ° स्फोटी | ° स्फोटा |
| 16 | 18 | द्विवर्णा | ° दिवर्णा |
| 18 | 24 | भ्रकुटी ° | भृकुटी ° |
| 33 | 19 | अघोर्या ° | घोर्या ° |
| 36 | 17 | ° वर्णाभा: | ° वर्णाभा: |
| 37 | 1 n. | ° रिवा | ° रिव |
| 43 | 4 | ° स्फाटा ° | ° स्फोटा ° |
| 46 | 6 | हस्तित्रिशूल ° | हस्तिसुर ° |
| 46 | 16 | वज्राङ्कुशावज्रपाशा–<br>वज्रस्फोटा ° | वज्राङ्कुशवज्रपाश–<br>वज्रस्फोट ° |
| 49 | 7 | सत्ववज्री | सत्त्ववज्री [ रत्नवज्री ] |
| 50 | 16 | गेंवण | गर्वेण |
| 53 | 3 | ° प्राप्त्या ° | ° प्राप्ता ° |
| 54 | 21 | वज्रेधर्म ° | वज्रधर्म ° |
| 54 | 21 | ° हेतु ° | ° वज्रहेतु ° |
| 65 | 12 | वज्राङ्कुशी | वज्राङ्कुशो |
| 65 | 13 | धूपा | रूपा |
| 65 | 16 | ° स्फोटा ° | ° स्फोटो |
| 76 | 20 | स्वाश्ले ° | स्वाश्ले ° |
| 78 | 3 | ° श्विता ° | ° श्विन्ता ° |
| 80 | 12 | ° वर्तिणी ° | ° वर्तिनी ° |
| 80 | 16 | वार ° | वीर ° |
| 83 | 2 | मानवका | मानका |
| 83 | 2 | ° यमान्तकप्रज्ञा ° | ° यमान्तकपद्मा ° |
| 84 | 14 | कृष्णा दीप्ता | कृष्णदीप्ता |
| 90 | 19 | ° रितोनीला ° | ° रितो नीला ° |
| 93 | 16 | पंण्डिता ° | पण्डिता ° |

